" इंदियविसयकसाए परीसहे वेयणाउ संसग्गे ( उवसग्गा )।
एए अवराहपया जत्थ विसीअंति दुम्मेहा " ॥ १ ॥

क्षुल्लकवत्, कृतिनस्तु एभिरेव करणभूतैः संसारकान्तारमुत्तरन्ति, कोऽसौ खुल्लउत्ति कहाणयं—

" कुंकणगो जहा एगो खंतो सपुत्तो पव्वइओ, सो अ चेल्लओ तस्स अईव इट्ठो, सीयमाणो भणइ—खंता ! ण सक्केमि अणुवाहणो हिंडिउं, अणुकंपाए खंतेण दिण्णाओ उवाहणाओ, ताहे भणइ—उवरितला सीएण फुट्टंति, खल्लिता ( ओ ) से कयाओ, पुणो भणइ—न सक्केमि भिक्खं हिंडिउं, तो सो पडिसए ठियस्स आणेइ, एवं न तरामि खंत ! भूमिए सुविउं, ताहे संथारो से अणुण्णाओ, पुणो भणइ—ण तरामि खंत ! लोअं काउं, तो खुरेण पकिज्जितं, ताहे भणति—अण्हाणयं न सक्केमि, तओ से फासुअपाणएणं कप्पो दिज्जति, आयरियपाउग्गं वत्थजुयलं घिप्पति, एवं जं जं भणति तं तं सो खंतो णेहपडिबद्धो तस्साणुजाणति । एवं काले गच्छमाणे य भणिओ—न तरामि अविरइयाए विणा अच्छिउं खंतत्ति । ताहे खंतो भणति—सढो, अजोगोत्ति काउं ( ऊण ) पडिस्सगाओ निप्फेडिओ, कम्मं काउं न जाणइ, अजाणंतो छणसंखडीए धाणिं काउं ( ऊण ) अजिण्णेण मओ, विसयविसट्टो मरिउं ( ऊण ) महिसो आयाओ, वाहिज्जइ अ। अह खंतो सामण्णपरियागं पालेऊण आउक्खए कालगओ, देवेसु उववण्णो, ओहिं पउंजति, ओहिणा आभोएऊण तं चेल्लयं तेण पुव्वणेहेण तेसिं गोहाण हत्थओ किणइ, वेउव्वियभंडिए जोएइ, वाहेति य गुरुगं, तं अतरंतो वोढुं तोत्तएण विंधिउं ( ऊण ) भणति—न तरामि खंता ! भिक्खं हिंडिउं, एवं भूमीए

# ॥ द्वितीयाध्ययनम् ॥



व्याख्यातं द्रुमपुष्पिकाध्ययनम् । इदानीं श्रामण्यपूर्विकाख्यमारभ्यते—अस्यैवमभिसम्बन्धः—इहाऽनन्तराध्ययने धर्मप्रशंसोक्ता, सा चेहैव जिनशासने इति, इहतु तदभ्युपगमे सति मा भूदभिनवप्रव्रजितस्याऽधृतेः संमोह इत्यतो धृतिमता भवितव्यमिति—एतदुच्यते, अनेन सम्बन्धेनायातमिदमध्ययनम् ।

कहं नु कुज्जा सामण्णं जो कामे न निवारए ।
पए पए विसीअंतो संकप्पस्स वसं गओ ॥ १ ॥

छा० कथं नु कुर्याच्छ्रामण्यं यः कामान्न निवारयेत् ।
पदे पदे विषीदन् सङ्कल्पस्य वशं गतः ॥ १ ॥

'कहं नु०'—कत्यहं कदाहं कथमहम् इत्याद्यदृश्यपाठान्तरत्यागेन दृश्यं व्याख्यायते—कथं नु कुर्याच्छ्रामण्यं यः कामान्न निवारयति, कथं केन प्रकारेण 'नु' क्षेपे यथा—'कथं नु स राजा यो न रक्षति' एवं कथं नु कुर्याच्छ्रामण्यं श्रमणभावं यः कामान्न निवारयति न प्रतिषेधते, किमिति न करोति ? [ तत्र निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शनमिति वचनात् कारणमाह ] पदे पदे विषीदन् सङ्कल्पस्य वशं गतः कामाऽनिवारणेनेन्द्रियाद्यपराधपदापेक्षया पदे पदे विषीदनात् ( विषदनात् ) सङ्कल्पस्य वशाङ्गतत्वादप्रशस्तोऽध्यवसायः—

" इंदियविसयकसाए परीसहे वेयणाउ संसग्गे ( उवसग्गा )।
एए अवराहपया जत्थ विसीअंति दुम्मेहा " ॥ १ ॥

क्षुल्लकवत्, कृतिनस्तु एभिरेव करणभूतैः संसारकान्तारमुत्तरन्ति, कोऽसौ खुल्लउत्ति कहाणयं—

"कुंकणगो जहा एगो खंतो सपुत्तो पव्वइओ, सो अ चेल्लओ तस्स अईव इट्ठो, सीयमाणो भणइ—खंता ! ण सक्केमि अणुवाहणो हिंडिउं, अणुकंपाए खंतेण दिण्णाओ उवाहणाओ, ताहे भणइ—उवरितला सीएण फुट्टंति, खल्लिता ( ओ ) से कयाओ, पुणो भणइ—न सक्केमि भिक्खं हिंडिउं, तो सो पडिसए ठियस्स आणेइ, एवं न तरामि खंत ! भूमिए सुविउं, ताहे संथारो से अणुण्णाओ, पुणो भणइ—ण तरामि खंत ! लोअं काउं, तो खुरेण पकितितं, ताहे भणति—अण्हाणयं न सक्केमि, तओ से फासुअपाणएणं कप्पो दिज्जति, आयरियपाउग्गं वत्थजुयलं घिप्पति, एवं जं जं भणति तं तं सो खंतो णेहपडिबद्धो तस्साणुजाणति । एवं काले गच्छमाणे य भणिओ—न तरामि अविरइआए विणा अच्छिउं खंतत्ति । ताहे खंतो भणति—सढो, अजोगोत्ति काउं ( ऊण ) पडिस्सगाओ निप्फेडिओ, कम्मं काउं न जाणइ, अजाणंतो छणसंखडीए धाणिं काउं ( ऊण ) अजिण्णेण मओ, विसयविसट्टो मरिउं ( ऊण ) महिसो आयाओ, वाहिज्जइ अ। अह खंतो सामण्णपरियागं पालेऊण आउक्खए कालगओ, देवेसु उववण्णो, ओहिं पउंजति, ओहिणा आभोएऊण तं चेल्लयं तेण पुव्वणेहेण तेसिं गोहाण हत्थओ किणइ, वेउव्वियभंडिए जोएइ, वाहेति य गुरुगं, तं अतरंतो वोढुं तोत्तएण विंधिउं ( ऊण ) भणति—न तरामि खंता ! भिक्खं हिंडिउं, एवं भूमीए

सयणं, लोअं काउं, एवं ताणि वयणाणि सव्वाणि उच्चारेति जाव अविरतिआए विणा न तरामि खंतोत्ति। ताहे एवं भणंतस्स तस्स महिसस्स इमं चित्तं जायं–' कहं एरिसं वक्कं सुतंति ', ताहे ईहापूहमग्गणगवेसणं करेइ, एवं चिंतयंतस्स तस्स जातिसरणं समुप्पण्णं, देवेण ओहीं पउत्तो, संबुद्धो। पच्छा भत्तं पच्चक्खाइत्ता देवलोअं गओ। एवं पए विसीअंतो संकप्पस्स वसं गच्छइ, जम्हा एस दोसो तम्हा अट्ठारससहस्ससीलंगाणं सारणानिमित्तं एए अवराहपए वज्जेज्जा "। तथा चाह निर्युक्तिकारः—



" अट्ठारस उ सहस्सा, सीलंगाणं जिणेहिं पण्णत्ता।
तेसिं पडिरक्खणट्ठा, अवराहपए उ वज्जेज्जा " ॥ १ ॥

द्रव्यक्रियां कुर्वन्, न श्रमणः, एवं चैतदाह—

वत्थगधमलंकारं इत्थीओ सयणाणि अ।
अच्छंदा जे न भुंजंति न से चाइत्ति वुच्चइ ॥ २ ॥

छा० वस्त्रगन्धाऽलङ्कारं स्त्रियः शयनानि च।
अच्छन्दा ये न भुञ्जते न से[1] त्यागीत्युच्यंते ॥ २ ॥



---

१ ' ते त्यागिन इत्युच्यन्ते '। इति पाठेन भाव्यम्।

'वत्थ'०–वस्त्राणि चीनांशुकादीनि, गन्धाः कोष्टपुटादयः, अलङ्काराः कटकादयः, [ अनुस्वारोऽलाक्षणिकः ] स्त्रियोऽनेकप्रकाराः, शयनानि पर्यङ्कादीनि, 'च' शब्द आसनाद्यनुक्तसमुच्चयार्थः, एतानि वस्त्रादीनि किम्? अच्छन्दा अस्ववशा ये केचन न भुञ्जते नासेवन्ते [ किं बहुवचनोद्देशेऽप्येकवचननिर्देशः ? विचित्रत्वात्सूत्रगतेर्विपर्ययश्च भवत्येवेति कृत्वा ] आह–नासौ त्यागीत्युच्यते, सुबन्धुवन्नासौ श्रमणः, कः पुनः सुबन्धुः ? इत्यत्र कथानकम्–

"जदा णंदो चंदगुत्तेण निच्छूढो, तया तस्स दारेण निग्गच्छंतस्स दुहिआ चंदउत्ते दिद्विं बंधेइ, एअं अक्खाणयं जहा आवस्सए, जाव बिंदुसारो राया जाओ। णंदसंतिओ अ सुबंधू णाम अमच्चो, सो चाणक्कस्स पदोसमावण्णो, छिद्दाणि मग्गति, अण्णया राआणं विण्णवेइ–जतिवि तुम्हे अम्हं वित्तं न देह तहावि अम्हेहिं तुम्ह हितं वत्तव्वं, भणइ य–तुम्हं माया चाणक्केण मारिआ, रण्णा धाती पुच्छिया, आमंति, कारणं न पुच्छियं, केणवि कारणेणं रण्णो अ सगासं चाणक्को आगओ। जाहे दिद्विं न देति ताहे चाणक्को चिंतेति–'रुट्ठो एस राया, अहं गताउ'त्ति काउं ( ऊण ) दव्वं पुत्तपउत्ताणं दाऊण, संगोवित्ता य, गंधा संजोइआ, पत्तयं च लिहिऊण सो वि जोगो समुग्गे छूढो। समुग्गो अ चउसु मंजूसासु छूढो। तासु छुभित्ता पुणो गंधोवरए छूढो। तं बहुहिं कीलियाहिं सुघडियं करेत्ता दव्वजायं णातिवग्गं च धम्मे णियोइत्ता अडवीए गोकुलट्ठाणे इंगिणीमरणं अब्भुवगओ। रण्णा य पुच्छियं–चाणक्को किं करेइ ? धाती य से सव्वं जहावत्तं परिकहेइ। गहियपरमत्थेण य भणियं–अहो मया असमेक्खितं कतं। सव्वंतेउर–जोह–बल–समग्गो खामेउं णिग्गओ। दिट्ठो य णेण करीसमज्झट्ठिओ। खामियं सबहुमाणं, भणिओ अणेणं–णगरं वच्चामो, भणति–मए सव्वपरिच्चाओ कओत्ति, तओ सुबंधुणा राया विण्णविओ–अहं से पूअं करेमि, अणुजाणह,

अणुण्णाए धूवं डहिऊण तंमि चेव एगप्पएसे करीसस्सोवरिं ते अंगारे परिठवेइ। सो अ करीसो पलित्तो। दड्ढो चाणक्को। ताहे सुबंधुणा राया विण्णविओ—चाणक्कस्स संतिअं घरं ममं अणुजाणह, अणुण्णाए गओ, घरं पच्चुविक्खमाणेण दिट्ठो अपवरओ घट्टिओ। सुबंधू चिंतेइ—किमवि इत्थत्थि, कवाडे भंजित्ता उग्घाडिओ, मंजूसं पासइ, सा वि उग्घाडिआ, जाव समुग्गं पासइ। मघमघंतगंधं सुपत्तयं पेच्छइ, तं पत्तयं वाएइ, तस्स य पत्तयस्स एसत्थो—'जो एअं चुण्णयं अग्घाइ, सो जइ ण्हाइ वा, समालभइ, अलंकारेइ, सीओदकं च पीअति, महतीए सिज्जाए सुवति, जाणेण गच्छति, गंधव्वं वा सुणेइ, एवमादि अन्ने वा इट्ठे विसए सेवेइ, जहा साहुणो अच्छंति तह सो जइ ण अच्छइ, तो मरइ'। ताहे सुबंधुणा विण्णासणत्थं अन्नो पुरिसो अग्घाइत्ता सद्दाइणो विसए भुंजाविओ, मओ अ। तओ सुबंधू जीवियट्ठी अकामो साहू जहा अच्छंतो वि ण साहू"।

एवमधिकृतसाधुरपि न साधुः, अतो न त्यागीत्युच्यते अभिधेयाऽर्थाऽभावात् ॥ २ ॥ यथा चोच्यते तथाभिधातुकाम आह—

जे अ कंते पिए भोए लद्धे विपिट्ठिकुव्वइ।
साहीणे चयइ भोए से हु चाइत्ति वुच्चइ ॥ ३ ॥

छा० यश्च कान्तान्प्रियान्भोगाँल्लब्धान् विपृष्ठीकरोति।
स्वाधीनस्त्यजति भोगान् स हि त्यागीत्युच्यते ॥ ३ ॥

'जे अ कंते'०-'च' शब्दस्याऽवधारणार्थत्वात् य एव कान्तान् कमनीयानित्यर्थः, निजान् इष्टान्, इह कान्तमपि किंचित् कस्यचित् कुतश्चिन्निमित्ततरादप्रियं स्यात्, यथोक्तम्-" चउहिं ठाणेहिं संते गुणे नासेज्जा, तंजहा-रोसेणं, पडिनिवेसेणं, अकतण्णुताए, मिच्छत्ताभिनिवेसेणं "। अतो विशेषणं-प्रियान् इष्टान् इति, भोगान् शब्दादीन्विषयान्, लब्धान् प्राप्तान्-उपनतान् इति यावत्। 'विप्पिट्ठिकुव्वइ' त्ति विविधमनेकैः प्रकारैः शुभभावनादिभिः पृष्ठतः करोति परित्यजतीत्यर्थः, न बन्धनबद्धः प्रोषितो वा किन्तु स्वाधीनोऽपरायत्तः, स्वाधीनानेव त्यजति भोगान्, पुनस्त्यागग्रहणं प्रतिसमयं त्यागपरिणामवृद्धिसंसूचनार्थम्, भोगग्रहणन्तु सम्पूर्णभोगग्रहणार्थं त्यक्तोपनतभोगसंसूचनार्थं वा। ततश्च य ईदृशो 'हु' शब्दस्याऽवधारणार्थत्वात्, स एव त्यागीत्युच्यते भरतादिवदिति। अत्राऽऽह-जदि भरहजंबुनामादिणो जे संपुण्णे संते भोगे परिच्चयंति ते परिच्चागिणो एवं ते भणंतस्स अयं दोसो भवति-" जे केइ अत्थसारहीणा दमगाइणो पव्वइऊण भावओ अहिंसादिगुणजुत्ते सामण्णे अब्भुज्जुआ ते किं अपरिच्चागिणो भवंति?" आयरिओ आह-ते वि तिण्णि रयणकोडीओ परिच्चइऊण पव्वइआ-अग्गि, उदयं, महिलं, तिण्णि रयणाणि लोगसाराणि परिच्चइऊण पव्वइआ, दिट्ठंतो-" एगो पुरिसो सुहम्मसामिणो सगासे कट्ठहारओ पव्वइओ, सो भिक्खं हिंडंतो लोएण भण्णति-एसो सो कट्ठहारओ पव्वइओ, सो सेहत्तेण आयरियं भणइ-ममं अण्णत्थ णेह, अहं ण सक्केमि अहियासेत्तए, आयरिएहिं अभओ आपुच्छिओ-वच्चामोत्ति, अभओ भणति-मासकप्पपाओग्गं खित्तं किं न एअं भवति, जेण अत्थक्के अण्णत्थ वच्चह! आयरिएहिं भणितं, जहा-सेहणिमित्तं, अभओ भणति-अच्छह वीसत्था, अहमेयं लोअं उवाएण निवारेमि, ठिओ आयरिओ। बितीए दिवसे तिण्णि रयणकोडीओ ठवियाओ,

उग्घेसाविअं नयरे–जहा अभओ दाणं देति, लोगो आगतो, भणियं च णेण–तस्स अहं एआओ तिण्णि कोडीओ देमि जो एआइं तिण्णि परिहरइ–अग्गिं, पाणियं, महिलियं च, लोगो भणति–एतेहिं विणा किं सुवण्णकोडीहिं? अभओ भणति–ता किं भणह दमउत्ति पव्वइओ, जो वि निरत्थओ पव्वइओ? तेण वि तिण्णि सुवण्णकोडीओ परिचत्ताओ, सच्चं सामि! ठिओ लोगो पत्तिओ। तम्हा अत्थपरिहीणो वि संजमे ठिओ तिण्णि लोगसाराणि अग्गिं, उदयं, महिलाओ य, परिच्चयंतो चाइत्ति लब्भइ'' ॥ ३ ॥ केनालम्बनेनेति?–

समाइ पेहाइ परिव्वयंतो
सिया मणो निस्सरइ बहिद्धा ॥
न सा महं नोवि अहं पि तीसे।
इच्चेव ताओ विणइज्ज रागं ॥ ४ ॥

छा० समया प्रेक्षया परिव्रजतः।
स्यान्मनो निस्सरति बहिः ॥
न सा मम नो अपि अहमपि तस्याः।
इत्येवं तस्या विनयेद्रागम् ॥ ४ ॥

'समाइ०'–तस्यैवं त्यागिनः समया आत्मपरतुल्यया प्रेक्षया–दृष्ट्या परिसमन्ताद्व्रजतो गच्छतः परि-व्रजतो गुरूपदेशादिना संयमगेहेषु वर्तमानस्येत्यर्थः, स्यात्कदाचित् अचिन्त्यत्वात्कर्मगतेर्मनो निस्सरति–बहिर्धावति, भुक्तभोगिनः पूर्वक्रीडितानुस्मरणादिना अभुक्तभोगिनश्च कुतूहलादिना मनोऽन्तःकरणं निस्सरति निर्गच्छति बहिद्धा संयमगेहाद् बहिरित्यर्थः। एत्थ उदाहरणं, जहा–" एगो रायपुत्तो बाहिरिआए उवट्ठाणसालाए अभिरमंतो अच्छइ, दासी अ तेण अतेण जलभरिअघडेण वोलेइ, तओ तेण तीए दासीए सो घडो गोलिआए भिण्णो, तं च अद्धितिं करितिं दट्ठूण पुणरावत्ती जाया, चिंतिअं च—

> जे चेव रक्खगा ते वि लोलगा, कत्थ कुविउं सक्का?।
> उदगाओ समुज्जालिओ किह अग्गी विज्झवेअव्वो ॥ १ ॥

पुणो निक्खलगोलिआए तक्खणा एव लहुहत्थयाए तं घडच्छिड्डं ढकितं। एवं जइ संजयस्स संजमं करितस्स बहिआ मणो निग्गच्छति तत्थ पसत्थेण परिणामेण तं असुहसंकप्पाछिड्डं चारित्तजलरक्खणट्ठाए ढक्केअव्वं "। केनालम्बनेनेति ? यस्यां राग उत्पन्नः, तां प्रति चिन्तनीयम्–न सा मम नाऽप्यहं तस्याः, पृथक्कर्मफलभुजो हि प्राणिनः, इत्येवं ततस्तस्याः सकाशाद्व्यपनयेद्रागम्। तत्त्वदर्शिनो हि सन्निवर्तन्त एव अतत्त्वदर्शिनो ( र्शन ) निमि-त्तत्वात्तस्येति तत्र–न सा महं नो वि अहं पि तीसेत्ति। एत्थ उदाहरणं–" एगो वाणिअदारओ, सो जायं उज्झित्ता पव्वइओ, सो अ ओहाणुप्पेहीभूओ, इमं च घोसेति–ण सा महं णो वि अहं पि तीसे, सो चिंतेति–सा वि मम अहं

पि तीसे, सा ममाणुरत्ता, कहमहं तं छड्डेहामित्ति काउं(ऊण)गहिआयारभंडगणेवत्थो चेव संपट्ठिओ। गओ अ तं गामं जत्थ सा, निवाणतडे च संपत्तो, तत्थ य सा पुव्वजाया पाणियस्स आगता, सा अ साविआ जाया, पव्वइउकामा अ, ताए सो णाओ, इयरो तं न जाणति, तेण सा पुच्छिता—अमुगस्स धूआ, किं मया जीवइ वा? सो चिंतेइ—जइ सासधरा तो उप्पव्वयामि, इत्तरहा न, ताए णातं, जहा—एस पव्वज्जं पयहिउकामो तो दो वि संसारे भमिस्सामोत्ति, भणियं च णाए—सा अण्णस्स दिण्णा, तओ सो चिंतिउमारद्धो—सच्चं भगवंतेहिं साहूहिं पाढिओ, जहा—ण सा महं णो वि अहं पि तीसे, परमसंवेगमावण्णो, भणियं च णेण—पडिणिअत्तामि, तीए वेरग्गपडिओत्ति णाऊण अणुसासिओ—'अणिच्चं जीविअं कामभोगा इत्तरिया,' एवं तस्स केवलिपण्णत्तं धम्मं परिकहेइ, अणुसिट्ठो जाणाविओ अ, पडिगओ आयरिअसगासं पव्वज्जाए थिरीभूओ। एवं अप्पा साहरेतव्वो जहा तेणंति" ॥ ४ ॥ एवं तावदान्तरो मनोनिग्रहविधिरुक्तः, न चायं बाह्यमन्तरेण कर्तुं शक्यते, अतस्तद्विधानार्थमाह—

आयावयाही चय सोगमल्लं।
कामे कमाही कमिअं खु दुक्खं॥
छिंदाहि दोसं विणइज्ज रागं।
एवं सुही होहिसि संपराए ॥ ५ ॥

छा० आतापय त्यज सौकुमार्यम्।
कामान् क्राम क्रान्तं खलु दुःखम्॥

छिन्धि द्वेषं विनयेद्रागम्।
एवं सुखी भविष्यसि सम्पराये ॥ ५ ॥

'आयाव०'–संयमगेहान्मनसोऽनिर्गमार्थम् आतापय–आतापनां कुरु। [ एकग्रहणे तज्जातीयग्रहण-मिति न्यायात् ] यथानुरूपम् ऊनोदरतादेरपि विधिः, अनेनात्मसमुत्थदोषपरिहारमाह, तथा त्यज सौकुमार्यम्, अनेन तूभयसमुत्थदोषपरिहारम्, तथाहि सौकुमार्यात् कामेच्छा प्रवर्तते, योषितां च प्रार्थनीयो भवति। एवमुभयासे-वनेन कामान्–प्राङ्निरूपितस्वरूपान् क्राम–उल्लंघय, यतस्तैः क्रान्तैः क्रान्तमेव दुःखं भवतीति शेषः। काम-निबन्धनत्वाद्दुःखस्य, 'खु' शब्दोऽवधारणे, अथाऽऽन्तरकामक्रमणमाह–छिन्धि द्वेषम् व्यपनय रागम् सम्यग्ज्ञानबलेन विपाकालोचनादिना, क्व? कामेष्विति गम्यते, शब्दादयो हि विषया एव कामा इति कृत्वा। एवं कृते फलमाह–एवमनेन प्रकारेण प्रवर्तमानः, किम्? सुखमस्यातीति सुखी भविष्यसि, क्व? सम्पराये संसारे यावदपवर्गं न प्राप्स्यसि तावत्सुखी भविष्यसि, सम्पराये–परीषहोपसर्गसङ्ग्रामे इत्यन्ये ॥ ५॥ किञ्च संयमगेहान्मनस एवाऽनिर्गमार्थमिदं चिन्तयेत्, यदुत—

पक्खंदे जलिअं जोइं धूमकेउं दुरासयं।
निच्छंति वंतयं भुत्तुं कुले जाया अगंधणे ॥ ६ ॥
छा० प्रस्कन्दन्ति ज्वलितं ज्योतिषं धूमकेतुं दुरा(सदं)श्रयम्।
नेच्छन्ति वान्तं भोक्तुं कुले जाता अगन्धने ॥ ६ ॥

'पक्खंदे०'—प्रस्कन्दन्ति—अध्यवस्यन्ति ज्वलितं ज्वालामालाकुलं न मुर्मुरादिरूपं, कम्? ज्योतिषम्—अग्निं, धूमकेतुं—धूमध्वजं, नोल्कादिरूपं, दुरासदं—दुरभिभवमित्यर्थः, 'च' शब्दलोपान्नेच्छन्ति वान्तं भोक्तुं विषमिति गम्यते, के? नागा इति गम्यत एव, किंविशिष्टा इत्याह—कुले समुत्पन्ना अगन्धने, नागानां हि भेदद्वयम्—गन्धनाः, अगन्धनाश्च "तत्थ गंधणा णाम जे डसिए मंतेहिं आगड्ढिआ तं विसं वणमुहाओ आवियंति, अगंधणा उण ते अवि मरणमज्झवसंति ण य वंतमावियंति"। उदाहरणं—"एगेण परिहिंडंतेण नगरे रायपुत्तो सप्पेण खइओ, आहितुंडएण य विज्जाए सव्वे सप्पा आवाहिआ, मंडले पवेसिता, भणिआ य णेण—जेण पुण रायपुत्तो खइओ सो अच्छउ, सव्वे गता, एगो ठिओ, सो भणितो—अहवा विसं आविअह अहवा एत्थ अग्गिम्मि णिवडाहि, सो अ अगंधणो, ताहे सो अग्गिम्मि पविट्ठो ण य तेण तं वंतयं पच्चाइअं"। उपसंहारस्तु एवं भावनीयः—"यदि तावत्तिर्यञ्चोऽप्यतिमानमात्रादपि जीवितं परित्यजन्ति न च वान्तं भुञ्जते तत्कथमहं जिनवचनविज्ञोऽपि विपाकदारुणान् विषयान् वान्तान् भोक्ष्ये इति"। अस्मिन्नेवार्थे द्वितीयमुदाहरणं—"जदा किल अरिट्ठनेमी पव्वइओ तया रहनेमी तस्स जिट्ठभाउओ रायमतिं उवयरइ, जवि णाम एसा ममं इच्छिज्जा। सा वि भगवती निव्विण्णकामभोगा, णायं च तीए जहा एसो ममं अज्झोववण्णो। अण्णया अ तीए महुघयसंजुत्ता पिज्जा पीआ, रहणेमी आगओ, मदनफलं मुहे काऊण य तीए वंतं, भणियं च—एयं पिज्जं पिआहि, तेण भणिअं—कहं वंतं पिज्जइ? तीए भणिओ—जइ ण पिज्जइ वंतं ततो अहं पि अरिट्ठनेमिसामिणा वंता कहं पिविउमिच्छसि?" ॥ ६ ॥ तथाहि अधिकृतार्थसंवाद्येवाह—

धिरत्थु ते जसोकामी जो तं जीवियकारणा ।
वंतं इच्छसि आवेउं सेअं ते मरणं भवे ॥ ७ ॥

छा० धिगस्तु ते यशस्कामिन् ! यस्त्वं जीवितकारणात् ।
वान्तमिच्छस्यापातुं श्रेयस्ते मरणं भवेत् ॥ ७ ॥

'धिरत्थु०'–तत्र राजीमती किलैवमुक्तवती–'धिगस्तु' धिक् शब्दः कुत्सायाम्, अस्तु-भवतु ते-तव पौरुषमिति गम्यते, हे यशस्कामिन् ! इति सासूयं क्षत्रियामन्त्रणम्, अथवा अकारप्रश्लेषादयशस्कामिन् ! धिगस्तु तव यस्त्वं जीवितकारणात्–असंयमजीवितहेतोर्वान्तमिच्छस्यापातुम्, परित्यक्तां भगवताऽभिलषसि भोक्तुम्, अत उत्क्रान्तमर्यादस्य श्रेयस्ते मरणं भवेत्, शोभनतरं ते मरणम्, न पुनरिदमकार्याऽऽसेवनम् इति। "ततो से धम्मो कहिओ, संबुद्धो, पव्वइओ य, रायमती वि तं बोहिऊण पव्वइआ। पच्छा अण्णया कयाइ सो रहनेमी बारवतीए भिक्खं हिंडिऊण सामिसगासमागच्छंतो वासवद्दलएण अब्भाहओ, एकं गुहं अणुप्पविट्ठो, रायमती वि सामिणो वंदणाए गता वंदित्ता पडिसमागच्छइ, अंतरे अ वरिसिउमाढत्तो, भिण्णा य तमेव गुहमणुप्पविट्ठा जत्थ सो रहनेमी, वत्थाणि अ पविसारिआणि, ताहे तीए अंगपच्चंगं दिट्ठं, सो रहनेमी तीए अज्झोववण्णो, दिट्ठो अणाए इंगितागारकुसलाए, णाओ असोभणो भावो एअस्स" ॥ ७ ॥ ततोऽसाविदमवोचत्–

अहं च भोगरायस्स तं च सि अंधगवण्हिणो।
मा कुले गंधणा होमो संजमं निहुओ चर ॥ ८ ॥

छा० अहं च भोगराजस्य त्वं चासि अन्धकवृष्णेः।
मा कुले गन्धनौ भूव, संयमं निभृतश्चर ॥ ८ ॥

'अहं च०' अहञ्च भोगराज्ञः (भोगराजस्य)-उग्रसेनस्य दुहितेति गम्यते, त्वं च भवसि अन्धकवृष्णेः समुद्रविजयस्य सुत इति गम्यते, अतो मा एकैकप्रधाने कुले आवां गन्धनौ भूव, 'जहण्ण सप्पतुल्ला होमुत्ति भणियं होति,' अतः संयमं निभृतश्चर-सर्वदुःखनिवारणं क्रियाकलापमव्याक्षिप्तः कुर्विति ॥ ८ ॥

जइ तं काहिसि भावं जा जा दिच्छसि नारीओ।
वायाविद्धुव्व हडो, अट्ठिअप्पा भविस्ससि ॥ ९ ॥

छा० यदि त्वं करिष्यसि भावं या या द्रक्ष्यसि नारीः।
वाताविद्धो व हडः, अस्थितात्मा भविष्यसि ॥ ९ ॥



'जइ तं०'-यदि त्वं करिष्यसि भावमभिप्रायं, प्रार्थनामिति, क्व? या या द्रक्ष्यसि नारीः-स्त्रियः, तासु तासु एताः शोभना एताश्चाशोभनाः, अतः सेवे-कामयामीत्येवम्भूतं भावं यदि करिष्यसि, ततो वाताविद्ध इव

हडः (हृडः)—वातप्रेरित इत्याबद्धमूलो वनस्पतिविशेषः, अस्थितात्मा भविष्यसि—सकलदुःखक्षयनिबन्धनेषु संयमगुणेष्वबद्धमूलत्वात् संसारसागरे प्रमादपवनप्रेरित इतश्चेतश्च पर्यटिष्यसि—इति ॥ ९ ॥



वृत्ति०
॥ १९ ॥

तीसे सो वयणं सुच्चा संजयाइ सुभासिअं ।
अंकुसेण जहा नागो धम्मे संपडिवाइओ ॥ १० ॥

छा० तस्याः स वचनं श्रुत्वा संयतायाः सुभाषितम् ।
अङ्कुशेन यथा नागः, धर्मे सम्प्रतिपादितः ॥ १० ॥

तीसे सो०'-तस्या राजीमत्याः, असौ-रथनेमिर्वचनमनन्तरोदितं श्रुत्वा, किंविशिष्टायाः ? संयत्याः (तायाः)—प्रव्रजिताया इत्यर्थः, किंविशिष्टं वचनम् ? सुभाषितं—संवेगनिबन्धनम्, अङ्कुशेन यथा नागो—हस्ती एवं धर्मे सम्प्रतिपादितः—संस्थापित इत्यर्थः, केन ? अङ्कुशतुल्येन वचनाङ्कुशेन, 'जहा णागोत्ति' एत्थ उदाहरणं—" वसंतपुरं नयरं, तत्थ एगा इब्भवहुआ नदीए ण्हाति, अण्णो अ तरुणो तं दट्ठूण भणति—



सुण्हायं ते पुच्छइ—एस नदी पवरसोहिअतरंगा ।
एए अ नदीरुक्खा अहं च पाएसु ते पडिओ ॥ १ ॥

ताहे सा पडिभणइ–

सुहया होउ णदी ते, चिरं च जीवंतु जे नदीरुक्खा।
सुण्हाय पुच्छयाणं घत्तीहामो पिअं काउं ॥ २ ॥

सो अ तीसे घरं वा दारं वा ण जाणति, तीसे अ चितिज्जयाणि चेडरूवाणि रुक्खे पलोअंताणि अच्छंति, तेण ताणं पुप्फफलाणि सुबहूणि दिण्णाणि, पुच्छियाणि अ–का एसा? ताणि भणंति–अमुगस्स सुण्हा, सो अ तीए विरहं न सहति, तओ परिव्वाइअं ओलग्गिउमाढत्तो, भिक्खा दिण्णा, सा तुट्ठा भणति–किं करेमि ओलग्गाए फलं? तेण भणिआ–अमुगस्स सुण्हं ममकए भणाहि, तीए गंतूण भणिता–अमुगो ते एवंगुणजाइओ पुच्छइ, ताए रुट्ठाए पउ-ल्लगाणि धोवंतीए मसिलित्तएण हत्थेण पिट्ठीए आहया, पंचंगुलिअं उट्ठिअं, अवदारेण निच्छूढा, गता तस्स साहति–णामं पि सा तव ण सुणेति, तेण णायं कालपंचमीए अवदारेण अइगंतव्वं, अतिगतो अ, असोगवणिआए मिलिआणि, सुत्ताणि य, जाव परसवणागतेण ससुरेण दिट्ठाणि, तेण णायं–न एस मम पुत्तो, पारदारिओ कोइ, पच्छा पायाओ तेण नेउरं गहिअं, चेइअं च तीए, सो भणिओ–णास लहुं, आवतिकाले साहिज्जं करिज्जासि, इअरी गंतूण भत्तारं भणइ–एत्थ घम्मो, असोअवणिअं वच्चामो, गंतूण सुत्ताणि, खणमेत्तं सुविऊण भत्तारं उट्ठवेति, भणइ अ–एअं तुज्झ कुलाणुरूवं, जेण मम पायाओ ससुरो नेउरं कड्ढेति? सो भणति–सुवसु, पभाए लब्भिहिति, पभाए थेरेण सिट्ठं, सो रुट्ठो भणति–विवरीओ थेरोत्ति, थेरो भणति–मए दिट्ठो अण्णो पुरिसो, विवाए जाए सा भणइ–अहं अप्पाणं सोहयामि?

तओ सरीरं जोइअं, जाव संकलापहारो दिट्ठो, तओ परुट्ठेण रण्णा देवी, मिंठो, हत्थी य तिण्णिवि छिण्णकडए चडावितानि, भणिओ अ मिंठो–एत्थं वाहेहि हत्थिं, दोहि य पासेहिं वेलुग्गाहा ठविया जाव एगो पाओ आगासे ठविओ, जणो भणति–किं एस तिरिओ जाणति ? एआणि मारियव्वाणि, तहावि राया रोसेणं ण मुंचति, तओ तिण्णि पादा आगासे कता, एगेणट्ठिओ, लोएण आकंदो कतो–किमेयं हत्थिरयणं विणासिज्जति ? रण्णा मिंठो भणिओ–तरसि णिअत्तिउं ? भणति–जदि दुअगाणं वि अभयं देसि, दिण्णं, तओ तेण अंकुसेण णियट्टिओ हत्थित्ति"। दार्ष्टान्तिकयोजना कृतैवेति ॥ १० ॥

**एवं करंति संबुद्धा पंडिआ पविअक्खणा ।**
**विणिअट्टंति भोगेसु जहा से पुरिसोत्तमो ॥ ११ ॥ त्ति बेमि ।**

**छा० एवं कुर्वन्ति सम्बुद्धाः पण्डिताः प्रविचक्षणाः ।**
**विनिवर्तन्ते भोगेभ्यः, यथा स पुरुषोत्तमः ॥ ११ ॥ इति ब्रवीमि ।**

'एवं करंति०'–एवं कुर्वन्ति संबुद्धा बुद्धिमन्तो बुद्धाः सम्यग्दर्शनसाहचर्येण दर्शनैकीभावेन वा बुद्धाः सम्बुद्धा विदितविषयस्वभावाः सम्यग्दृष्टय इत्यर्थः, त एव विशिष्यन्ते–'पण्डिताः प्रविचक्षणाः, तत्र पण्डिता दर्शनपरिणामवन्तः प्रविचक्षणाश्चरणपरिणामवन्तः'। अन्ये तु व्याचक्षते–सम्बुद्धाः सामान्येन बुद्धिमन्तः पण्डिता वान्तभोगाऽऽसेवनदोषज्ञाः प्रविचक्षणा अवद्यभीरव इति, किं कुर्वन्ति ? विनिवर्तन्ते भोगेभ्यो यथा, क इत्यत्र आह–

यथासौ पुरुषोत्तमः–रथनेमिः, आह कथं तस्य पुरुषोत्तमत्वं यो हि प्रव्रजितोऽपि विषयाभिलाषीत्युच्यते ? तथाभिलाषेऽप्यप्रवृत्तेः, कापुरुषस्त्वभिलाषाऽनुरूपं चेष्टत एवेति । अपरस्त्वाह–दशवैकालिकं नियतश्रुतमेव यत उक्तम्—

" णायज्झयणा हरणा इसिभासिअ मो पइण्णय सुआ य ।
ते हुंति चाणियता णिअयं पुण सेसमुस्सण्णं " ॥ १ ॥

तत्कथमभिनवोत्पन्नमिदमुदाहरणं युज्यते ? इत्युच्यते–एवम्भूतार्थस्यैव नियतसूत्रेऽपि भावात्, दुस्सहग्रहणाच्चादोषः, प्रायो नियतं न तु सर्वथा नियतमेवेत्यर्थः, ब्रवीमि इति न स्वमनीषिकया किन्तु तीर्थकरगणधरोपदेशेनेति ॥ ११ ॥ दशवैकालिकश्रुतस्कन्धे द्वितीयं श्रामण्यपूर्विकाध्ययनं व्याख्यातम् ।

॥ सामण्णपुव्विअज्झयणं बिईअं ॥
॥ श्रामण्यपूर्विकाध्ययनं द्वितीयम् ॥



## ॥ तृतीयाध्ययनम् ॥

व्याख्यातं श्रामण्यपूर्विकाध्ययनम्, इदानीं तु क्षुल्लिकाचारकथाख्यमारभ्यते । अस्य चायमभिसम्बन्धः—इहानन्तराध्ययने धर्माभ्युपगमे सति मा भूदभिनवप्रव्रजितस्याधृतेः संमोह इत्यतो धृतिमता भवितव्यमित्युक्तम्, इह तु सा धृतिराचारे कार्या, न त्वनाचारे कार्या, अयमेवात्मसंयमोपाय इत्येतदुच्यते, उक्तं च—

" तस्यात्मा संयतो यो हि सदाचारे रतः सदा ।
स एव धृतिमान् धर्मस्तस्यैव हि जिनोदितः " ॥ १ ॥

इत्यनेन सम्बन्धेनायातमिदमध्ययनमिति ।

**संजमे सुट्ठिअप्पाणं विप्पमुक्काण ताइणं ।**
**तेसिमेयमणाइण्णं निग्गंथाण महेसिणं ॥ १ ॥**

छा० **संयमे सुस्थितात्मनां विप्रमुक्तानां त्रायिणाम् ।**
**तेषामेतदनाचीर्णं निर्ग्रन्थानां महर्षीणाम् ॥ १ ॥**

'संजमे०'—संयमे प्राङ्निरूपितस्वरूपे शोभनेन प्रकारेण आगमनीत्या स्थित आत्मा येषां ते तथा, तेषाम्, त एव विशिष्यन्ते—विविधमनेकप्रकारैः प्रकर्षेण भावसारं मुक्ता बाह्याभ्यन्तरेण ग्रन्थेन इति विप्रमुक्तास्तेषां, त एव

वि०–त्रायन्ते आत्मानं परमुभयञ्चेति त्रातारः, आत्मानं प्रत्येकबुद्धाः, परं तीर्थकराः, स्वतस्तीर्णत्वादुभयं स्थविरा इति। तेषामिदं वक्ष्यमाणलक्षणम्, अनाचरितम्–अकल्पम्, केषाम् ? इत्याह–निर्ग्रन्थानां–साधूनाम्, इत्यभिधानमेतत्, महान्तश्च ते ऋषयश्च महर्षयः, यतय इत्यर्थः। तेषामिह च पूर्वपूर्वभाव एवोत्तरोत्तरभावो नियतो हेतुहेतुमद्भावेन वेदितव्यः, यत एव संयमे सुस्थितात्मानः, अत एव विप्रमुक्ताः, संयमसुस्थिताऽऽत्मनिबन्धनत्वाद्विप्रमुक्तेः, एवं शेषेष्वपि भावनीयम्, अन्येतु पश्चानुपूर्व्या हेतुहेतुमद्भावमित्थं वर्णयन्ति–यत एव महर्षयः, अत एव निर्ग्रन्थाः, एवं शेषेष्वपि द्रष्टव्यम् इति ॥ १ ॥ साम्प्रतं यदनाचरितं तदाह––

उद्देसिअं कीअगडं निआगमभिहडाणि अ।
राइभत्ते सिणाणे अ गंधमल्ले अ वीअणे ॥ २ ॥

छा० औद्देशिकं क्रीतकृतं, नियोगिकमभ्याहृतानि च।
रात्रिभक्तं स्नानं च, गन्धमाल्ये च वीजनम् ॥ २ ॥

'उद्देसिअं०'–साध्वाद्याश्रित्य–दानारम्भस्येत्युद्देशः, तत्रभवमौद्देशिकम्। क्रयणं क्रीतं [भावे क्तः प्र०, साध्वादिनिमित्तमिति गम्यते] तेन कृतं क्रीतकृतम्, 'निआग'मिति–आमन्त्रितस्य पिण्डस्य ग्रहणं नित्यं नत्वनामन्त्रितस्य, 'अभिहडाणि'त्ति स्वग्रामादेः साधुनिमित्तमभिमुखमानीतमभ्याहृतम् [बहुवचनं स्वपरग्रामनिशीथादिभेदख्यापनार्थम्] तथा रात्रिभोजनं दिवसगृहीतदिवसभक्तादिचतुर्भङ्गिलक्षणम्, देशस्नानम्–अधिष्ठानशौचातिरेकेण अक्षि-

पस्समक्षालनं, सर्वस्नानं प्रतीतम्, तथा गन्धमाल्ये वीजनं च गन्धग्रहणात्कोष्टपुटादिपरिग्रहः, माल्यग्रहणाच्च ग्रथितवेष्टिमादेर्माल्यस्य, वीजनं तालवृन्तादिना घर्मे, इदमनाचरितम्, दोषाश्चौद्देशिकादिषु आरम्भप्रवर्तनादयः स्वधिया वाच्याः ॥ २ ॥

संनिही गिहिमत्ते अ रायपिंडे किमिच्छए ।
संबाहणा दंतपहोअणा य संपुच्छणा देहपलोअणा य ॥ ३ ॥

सन्निधिर्गृहिमात्रं च राजपिण्डः किमिच्छकः ।
सम्बाधनं दन्तप्रधावनं च सम्प्रश्नः ( सम्प्रच्छना ) देहप्रलोकनं च ॥ ३ ॥

'संनिही०'—सन्निधीयतेऽनया दुर्गतावात्मेति सन्निधिः—घृतगुडादीनां सञ्चयक्रिया, गृहिमात्रं च गृहस्थभाजनं च, तथा च राजपिण्डो नृपाऽऽहारः, कः किमिच्छतीत्येवं यो दीयते स किमिच्छकः, तथा सम्बाधनम्—अस्थिमांसत्वग्रोमसुखतया चतुर्विधमर्दनम्, दन्तप्रधावनं च अङ्गुल्यादिना क्षालनम्, तथा सम्प्रश्नः—सावद्यो गृहस्थविषयः, राढार्थं कीदृशो वाऽहमित्यादिरूपः, देहप्रलोकनं च आदर्शादौ, दोषाश्च सन्निधिप्रभृतिषु परिग्रहप्राणातिपातादयः स्वधिया वाच्याः ॥ ३ ॥



अट्ठावए अ नालीए छत्तस्स य धारणट्ठाए ।
तेगिच्छं पाणहा पाए समारंभं च जोइणो ॥ ४ ॥

छा० अष्टापदं च नालिका, छत्रस्य च धारणमनर्थाय ।
चैकित्स्यमुपानहौ पादयोः, समारम्भश्च ज्योतिषः ॥ ४ ॥

'अट्ठावए०'–अष्टापदं च इति अष्टापदं द्यूतम्, अर्थपदं वा गृहस्थमधिकृत्य नीत्यादिविषयम्, तथा नालिका चेति द्यूतविशेषलक्षणा यत्र मा भूत् कलयाऽन्यथा पाशपातनमिति नालिकया पात्यते इति, अष्टापदेन सामान्यतो द्यूतग्रहणे सत्यपि अभिनिवेशनिबन्धनत्वेन नालिकायाः प्राधान्यख्यापनार्थम् भेदेनोपादानम्, अर्थपदमेवोक्तं तदित्यन्येऽभिदधति, अस्मिन्पक्षे सकलद्यूतोपलक्षणार्थं नालिकाग्रहणम् अष्टापदद्यूतविशेषपक्षे चोभयोरिति, तथा छत्रस्य च लोकप्रसिद्धस्य धारणम्, आत्मानं परञ्च प्रत्यनर्थाय इति, आगाढग्लानाद्यालम्बनं मुक्त्वा अनाचरितम् [ प्राकृतशैल्यात्र अनुस्वारलोपः, अकारनकारलोपौ च द्रष्टव्यौ, तथा च श्रुतिप्रामाण्यादिति ] तथा नेच्छन्ति चिकित्साया भावश्चैकित्स्यम्, उपानहौ पादयोरिति साभिप्रायकं न त्वापत्कल्पपरिहारार्थमुपग्रहधारणेन, तथा समारम्भणं च ज्योतिषोऽग्नेः, दोषा अष्टापदादीनां क्षुण्णा एवेति ॥ ४ ॥

सिज्जायरपिंडं च आसंदी पलिअंकए ।
गिहंतरनिसिज्जा य गायस्सुव्वट्टणाणि अ ॥ ५ ॥

छा० शय्यातरपिण्डश्च आसन्दीपर्यङ्कौ ।
गृहान्तरनिषद्या च गात्रस्योद्वर्तनानि च ॥ ५ ॥

'सिज्जायर०'—शय्यातरपिण्डः—शय्या—वसतिः, तया तरति संसारमिति शय्यातरः—साधुवसतिदाता तत्पिण्डः, तथा आसन्दकपर्यङ्कौ—आसन्दको मञ्चकः, पर्यङ्कः पल्यङ्कः, तथा गृहान्तरनिषद्या च—गृहमेव गृहान्तरम् गृहयोर्वाऽपान्तरालं तत्रोपवेशनं, 'च' शब्दात् पाटकादिग्रहः, तथा गात्रस्य—कायस्योद्वर्तनानि च, उद्वर्तनानि—पङ्कापनयनलक्षणानि, 'च' शब्दादन्यसंस्कारपरिग्रहः ॥ ५ ॥

गिहिणो वेआवडिअं जा य आजीववत्तिया ।
तत्तानिव्वुडभोइत्तं आउरस्सरणाणि अ ॥ ६ ॥

छा० गृहिणो वैयावृत्यं, या च आजीववृत्तिता ।
तप्ताऽनिर्वृतभोजित्वम्, आतुरस्मरणानि च ॥ ६ ॥

'गिहिणो०'—गृहिणो—गृहस्थस्य वैयावृत्यमिति व्यावृत(स्य)भावो वैयावृत्यं गृहस्थं प्रति अन्नादिसम्पादनमित्यर्थः, तथा या चाऽऽजीववृत्तिता—जातिकुलगणकर्मशिल्पानामाजीवनमाजीवः, तेन वृत्तिस्तद्भाव आजीववृत्तिता, जात्याद्याजीवनेन आत्मपालनेत्यर्थः, इयञ्च अनाचारिता, तथा तप्ताऽनिर्वृतभोजित्वं तप्तञ्च तदनिर्वृतञ्च अत्रिदण्डोद्वृत्तं चेति विग्रहः, उदकमिति विशेषणान्यथानुपपत्त्या गम्यते, तद्भोजित्वं मिश्रसचित्तोदकभोजित्वम् इत्यर्थः, तथा आतुरस्मरणानि च क्षुधाद्यातुराणां पूर्वोपभुक्तस्मरणानि च, आतुरशरणानि च दोषातुराश्रयदानानीति ॥ ६ ॥

मूलए सिंगबेरे अ इ(उ)च्छुखंडे अनिव्वुडे ।
कंदे मूले अ सचित्ते फले बीए अ आमए ॥ ७ ॥

छा० मूलकः शृङ्गवेरं च इक्षुखण्डमनिर्वृतम् ।
कन्दो मूलं च सचित्तं फलं बीजं चामकम् ॥ ७ ॥

'मूलए०'–मूलको लोकप्रतीतः, शृङ्गवेरं चार्द्रकञ्च, तथेक्षुखण्डं च लोकप्रतीतम्, अनिर्वृतग्रहणं सर्वत्राभिसंबध्यते। अनिर्वृतम् अपरिणतम्, इक्षुखण्डं वाऽपरिणतं द्विपर्वान्तं यद्वर्तते, तथा कन्दः–वज्रकन्दादि, मूलञ्च सट्टामूलादि, सचित्तं, तथा फलं च त्रपुषादि, बीजञ्च तिलादि, आमकं–सचित्तम् ॥ ७ ॥

सोवच्चले सिंधवे लोणे रु(रो)मालोणे अ आमए ।
सामुद्दे पंसुखारे अ कालालोणे अ आमए ॥ ८ ॥

छा० सौवर्चलं सैन्धवं लवणं रुमालवणं चामकम् ।
सामुद्रं पांशुक्षारश्च कृष्णलवणं चामकम् ॥ ८ ॥

'सोवच्चले०'–सौवर्चलम्, सैन्धवम्, लवणञ्च–साम्भरिलवणं, रुमालवणं च, आमकमिति सचित्तम्, सामुद्रं समुद्रलवणमेव, पांशुक्षारश्चोषरलवणं, कृष्णलवणञ्च, सैन्धवलवणं पर्वतैकदेशजम् ॥ ८ ॥

धूवणेत्ति वमणे अ वत्थीकम्म विरेयणे ।
अंजणे दंतवणे अ गायब्भंगविभूसणे ॥ ९ ॥

छा० धूपनमिति वमनं च वस्तिकर्म विरेचनम् ।
अञ्जनं दन्तवनं(काष्ठं) च गात्राभ्यङ्गविभूषणे ॥ ९ ॥

'धूवणेत्ति०'–धूपनमित्यात्मवस्त्रादेः, अनागतव्याधिनिवृत्तये, धूम्रपानमित्यन्ये व्याचक्षते, वमनं–मदनफलादिना, वस्तिकर्म–पुटकेनाधिष्ठाने स्नेहदानम्, विरेचनं दन्त्यादिना, तथाञ्जनं रसाञ्जनादिना, दन्तकाष्ठं च प्रतीतम्, तथा गात्राभ्यङ्गस्तैलादिना, विभूषणं गात्राणामेवेति ॥ ९ ॥ क्रियासूत्रमाह––

सव्वमेअमणाइण्णं निग्गंथाण महेसिणं ।
संजमंमि अ जुत्ताणं लहुभूअविहारिणं ॥ १० ॥

छा० सर्वमेतदनाचीर्णं निर्ग्रन्थानां महर्षीणाम् ।
संयमे च युक्तानां लघुभूतविहारिणाम् ॥ १० ॥



'सव्वमेअं०'–सर्वमेतदौद्देशिकादि यदनन्तरमुक्तम् तदनाचरितम्, केषाम्? इत्याह–निर्ग्रन्थानां महर्षीणां साधूनामित्यर्थः, त एव विशेष्यन्ते–संयमे 'च' शब्दात्तपसि युक्तानां लघुभूतविहारिणां–लघुभूतो वायुः,

ततश्च वायुभूतोऽप्रतिबद्धतया विहारो येषां ते लघुभूतविहारिणः, तेषां, किमित्यनाचरितम् ॥ १० ॥ यतस्त एवम्भूता भवन्ति, इत्यत आह–

पंचासवपरिण्णाया तिगुत्ता छसु संजया ।
पंचनिग्गहणा धीरा निग्गंथा उज्जुदंसिणो ॥ ११ ॥

छा० पञ्चास्रवपरिज्ञातास्त्रिगुप्ताः षट्सु संयताः ।
पञ्चनिग्रहणा धीरा निर्ग्रन्था ऋजुदर्शिनः ॥ ११ ॥

'पंचासव०'–पञ्चास्रवा–हिंसादयः, परिज्ञाता द्विविधया परिज्ञया ज्ञपरिज्ञया प्रत्याख्यान–परिज्ञया च परिसमन्ताद् ज्ञाता यैस्ते पञ्चास्रवपरिज्ञाताः [ आहिताग्न्यादेराकृतिगणत्वात् न क्तस्य पूर्वनिपातः, प्रादिसमासो युक्त एव ]परिज्ञातपञ्चास्रवा इति वा, यत एव च एवम्भूता अत एव त्रिगुप्तिभिः–मनोवाक्कायगुप्तिभिः (गुप्ताः), षट्संयताः, 'पंचनिग्गहणा' इति पञ्चानां निग्रहणाः पञ्चनिग्रहणाः पञ्चानामिन्द्रियाणाम्, धीरा–बुद्धिमन्तः स्थिरा वा, निर्ग्रन्थाः–साधवः, ऋजुदर्शिन इति ऋजुर्मोक्षं प्रति ऋजुत्वात्संयमः, तं पश्यन्ति उपादेयतया इति ऋजुदर्शिनः संयमप्रतिबद्धा इति ॥ ११ ॥

आयावयंति गिम्हेसु हेमंतेसु अवाउडा ।
वासासु पडिसंलीणा संजया सुसमाहिआ ॥ १२ ॥



---

१ लघुभूतविहारा इति भाव्यं, तथापि प्राच्यत्वान्मूलं न परिवर्तितम् ।

छा० आतापयन्ति ग्रीष्मेषु हेमन्तेष्वप्रावृताः ।
- वर्षासु प्रतिसंलीनाः संयताः सुसमाहिताः ॥ १२ ॥

'आयावयंति०'–आतापयन्त्यूर्ध्वस्थानादिना उष्णकाले, तथा हेमन्तेषु अप्रावृताः प्रावरणरहितास्तिष्ठन्ति, वर्षासु प्रतिसंलीना इति एकाश्रयस्था भवन्ति, संयताः सुसमाहिता ज्ञानादिषु यत्नपराः [ ग्रीष्मादिषु बहुवचनं प्रतिवर्षकरणज्ञापनार्थम् ] ॥ १२ ॥

परीसहरिऊदंता धुअमोहा जिइंदिआ ।
सव्वदुक्खप्पहीणट्ठा पक्कमंति महेसिणो ॥ १३ ॥
छा० परीषहरिपुदान्ता धुतमोहा जितेन्द्रियाः ।
सर्वदुःखप्रहाणार्थं प्रक्राम्यन्ति महर्षयः ॥ १३ ॥

'परीसह०'–मार्गाऽच्यवनेन निर्जरार्थं परिषोढव्याः परीषहाः क्षुत्पिपासादयस्त एव रिपवस्तत्तुल्यधर्मत्वात्, परीषहरिपवस्ते दान्ता–उपशमं नीता यैस्ते परीषहरिपुदान्ताः, [ समासः पूर्ववत् ] तथा धुतमोहाः क्षिप्तमोहा इत्यर्थः, मोहोऽज्ञानम्, तथा जितेन्द्रियाः शब्दादिषु द्वेषरहिताः, त एवम्भूताः सर्वदुःखप्रक्षयार्थं शारीरमानसाऽशेषदुःखप्रक्षयार्थं प्रक्रामन्ति–प्रवर्तन्ते महर्षयः-साधवः ॥ १३ ॥

दुक्कराइं करित्ताणं दुस्सहाइं सहि(हे)त्तु य।
के इत्थ देवलोएसु केइ सिज्झंति नीरया ॥ १४ ॥

छा० दुष्कराणि कृत्वा दुःसहानि सहित्वा च।
केचनात्र देवलोकेषु केचन सिध्यन्ति नीरजस्काः ॥ १४ ॥

'दुकराइं०'—एवं दुष्कराणि कृत्वा औद्देशिकत्यागादीनि, तथा दुस्सहानि सहित्वाऽऽतापनादीनि, केचन तत्र देवलोकेषु सौधर्मादिषु गच्छन्तीति वाक्यशेषः, तथा केचन सिध्यन्ति तेनैव भवेन सिद्धिं प्राप्नुवन्ति [ वर्तमाननिर्देशः सूत्रस्य त्रिकालविषयत्वज्ञापनार्थः ] नीरजस्का अष्टविधकर्मविप्रमुक्ता नत्वेकेन्द्रिया इव कर्मयुक्ता एवेति ॥ १४ ॥

खवित्ता पुव्वकम्माइं संजमेण तवेण य।
सिद्धिमग्गमणुप्पत्ता ताइणो परिनिव्वुडा ॥ १५ ॥ त्ति बेमि।

छा०- क्षपयित्वा पूर्वकर्माणि संयमेन तपसा च।
सिद्धिमार्गमनुप्राप्ताः, त्रायिणः परिनिर्वृताः ॥ १५ ॥ इति ब्रवीमि।

'खवित्ता०'—ते देवलोकाच्च्युताः क्षपयित्वा पूर्वकर्माणि सावशेषाणि, केनेत्याह—संयमेन उक्तलक्षणेन तपसा च एवं प्रवाहेण सिद्धिमार्गं सम्यग्दर्शनादिलक्षणमनुप्राप्ताः सन्तस्त्रातार आत्मादीनां परिनिर्वान्ति सर्वथा सिद्धिं प्राप्नुवन्ति ॥ १५ ॥ इति क्षुल्लिकाचारकथाध्ययनाऽवचूरिः ।



॥ खुड्डिआयारज्झयणं तईअं ॥

॥ क्षुल्लिकाचाराध्ययनं तृतीयम् ॥



# ॥ चतुर्थाध्ययनम् ॥





क्षुल्लिकाचारकथायामाचारे धृतिः कार्या इत्युक्तम्, सचाऽऽचारः प्रायः षड्जीवनिकायगोचर इत्येतदुच्यते, उक्तं च—

" छसु जीवनिकायेसु, जे बुहे संजए सया ।
से चेव होइ विण्णेए, परमत्थेण संजए " ॥ १ ॥ इति ।

" जीवाऽजीवाहिगमो १, चरित्तधम्मो २ तहेव जयणा य ३ ।
उवएसो ४ धम्मफलं ५, छज्जीवणिआइ अहिगारा " ॥ २ ॥

जीवाऽजीवाऽभिगमः १, प्राणातिपातादिनिवृत्तिरूपः २, पृथिव्यादिष्वारम्भ–परिहार–यत्नः ३, उपदेशः ४, अनुत्तरज्ञानादि ५ । " पूर्वोक्ताधिकारसम्पन्नस्य षड्जीवनिकाध्ययनस्येदमादिसूत्रम् "—

**सुअं मे आउसं तेणं भगवया एवमक्खायं । इह खलु छज्जीवणिआ नामज्झयणं समणेणं भगवया महावीरेणं कासवेणं पवेइआ सुअक्खाया सुपण्णत्ता । सेअं मे अहिज्जिउं अज्झयणं धम्मपण्णत्ती । कयरा खलु सा छज्जीवणिआ नामज्झयणं समणेणं भगवया महावीरेणं कासवेणं पवेइआ सुअक्खाया सुपण्णत्ता सेअं मे अहिज्जिउं अज्झयणं धम्मपण्णत्ती ? इमा खलु सा छज्जीवणिआ नामज्झयणं**

समणेणं भगवया महावीरेणं कासवेणं पवेइआ सुअक्खाया सुपण्णत्ता सेअं मे अहिज्जिउं, अज्झयणं धम्मपण्णत्ती । तंजहा–पुढवीकाइआ १, आउकाइआ २, तेउकाइआ ३, वाउकाइआ ४, वणस्सइ-काइआ ५, तसकाइआ ६ ।

छा० श्रुतं मया आयुष्मन्! तेन भगवता एवमाख्यातम्–इह खलु षड्जीवनिका नामाध्ययनं (एषा षड्जीवनिका) श्रमणेन भगवता महावीरेण काश्यपेन प्रवेदिता स्वाख्याता सुप्रज्ञप्ता । श्रेयो मेऽध्येतुमध्ययनं धर्मप्रज्ञप्तिः । कतरा खलु सा षड्जीवनिका नामाध्ययनं श्रमणेन भगवता महावीरेण काश्यपेन प्रवेदिता स्वाख्याता सुप्रज्ञप्ता श्रेयो मेऽध्येतुमध्ययनं धर्मप्रज्ञप्तिः? इमा खलु सा षड्जीवनिका नामाध्ययनं श्रमणेन भगवता महावीरेण काश्यपेन प्रवेदिता स्वाख्याता सुप्रज्ञप्ता श्रेयो मेऽध्येतु-मध्ययनं धर्मप्रज्ञप्तिः । तद्यथा–पृथ्वीकायिकाः, अप्कायिकाः, तेजस्कायिकाः, वायुकायिकाः, वनस्पति-कायिकाः, त्रसकायिकाः ।

'सुअं मे०'–श्रूयते तदिति श्रुतम्, मतिविशिष्टाऽर्थप्रतिपादनफलं वाग्योगमात्रं भगवता निसृष्टमात्मीय-श्रवणकोटरप्रविष्टम्, क्षायोपशमिकभावपरिणामाऽऽविर्भावकारणं श्रुतमित्युच्यते, 'मया' इत्यात्मपरामर्शः, आयुरस्याऽ-स्तीत्यायुष्मान्, तस्याऽऽमन्त्रणं हे आयुष्मन्! कः कमेवमाह–सुधर्मा जम्बूस्वामिनमिति, 'तेने'ति भुवनभर्तुः परा-मर्शः, भगः समग्रैश्वर्यादिलक्षणः, सोऽस्याऽस्तीति भगवान्, तेन भगवता श्रीवर्धमानस्वामिनेत्यर्थः, एवमिति प्रकार-वचनः शब्दः, आख्यातमिति केवलज्ञानेनोपलभ्याऽऽवेदितम्, किम्? अत आह–'इह खलु षड्जीवनिका नामाऽ-

ध्ययनमस्तीति वाक्यशेषः,' इहेति लोके प्रवचने वा, 'खलु' शब्दादन्यतीर्थकृत्प्रवचनेषु, षड्जीवनिकायिकेति पूर्ववत्, नामेत्यभिधानम्, अध्ययनं श्रुतविशेषः, इह च 'श्रुतं मयेत्यनेनाऽऽत्मपरामर्शेनैकान्तक्षणभङ्गाऽपोहमाह', तत्रेत्थम्भूताऽर्थाऽनुपपत्तेरिति, उक्तञ्च—

" एगंतखणिअपक्खे, गहणं चिअ सव्वहा ण अत्थाणं ।
अणुसरणसासणाइं, कुओ उ तेलुक्कसिद्धाइं " ॥ १ ॥

तथा—आयुष्मन्निति च प्रधानगुणनिष्पन्नेनाऽऽमन्त्रणवचसा गुणवते शिष्यायाऽऽगमरहस्यं देयं नाऽगुणवते, इत्याह, तदनुकम्पाप्रवृत्तेरिति, उक्तञ्च—

" आमे घडे निहत्तं, जहा जलं तं घडं विणासेइ ।
इअ सिद्धंत–रहस्सं, अप्पाहारं विणासेइ " ॥ १ ॥

आयुश्च-प्रधानो गुणः सति तस्मिन्नव्यवच्छित्तिभावात्, तथा तेन भगवतैवमाख्यातमित्यनेन स्वमनीषिकानिरासाच्छास्त्रपारतन्त्र्यप्रदर्शनेन नह्यसर्वज्ञेनाऽनात्मवताऽन्यतस्तथाभूतात् सम्यङ्(ग)निश्चित्य परलोकदेशना कार्या, इत्येतदाह, विपर्ययसम्भवात्, उक्तञ्च—

" किं एत्तो पावयरं, सम्मं अणहिगतधम्मसब्भावो ।
अण्णं कुदेसणाए, कट्ठयरागंमि पाडेति " ॥ १ ॥



॥ ३७ ॥

अथवाऽन्यथा व्याख्यायते 'सूत्रैकदेशः'–'आउसं तेणं' ति भगवत एव विशेषणम्, आयुष्मता भगवता चिरजीविनेत्यर्थः, मङ्गलवचनं चैतत्, अथवा जीवता साक्षादेव, अनेन गणधरस्य परम्पराऽऽगमस्य जीवनविमुक्ताऽनादिशुद्धवक्तुश्चाऽपोहमाह, देहाऽऽद्यभावेन तथाविधप्रयत्नाऽभावात्, उक्तञ्च—

" वयणं न कायजोगा,–भावेण य सो अणादिसुद्धस्स ।
गहणंमि अ णो हेऊ, सत्थं अत्तागमो कहणु " ॥ १ ॥

अथवा 'आवसतेणं' ति गुरु(पाद)मूलमावसता, अनेन च शिष्येण गुरुचरणसेविना सदा भाव्यमित्येतदाह, ज्ञानादिवृद्धिसद्भावात्, उक्तञ्च—

" णाणस्स होइ भागी, थिरतरओ दंसणे चरित्ते अ ।
धण्णा आवकहाए, गुरुकुलवासं ण मुंचंति " ॥ १ ॥

अथवा 'आमुसंतेणं' ति आमृशता भगवत्पादारविन्दयुगलमुत्तमाङ्गेन, अनेन च विनयप्रतिपत्तेर्गरीयस्त्वमाह, विनयस्य मोक्षमूलत्वात्, उक्तञ्च—

" मूलं संसारस्स उ, होंति कसाया अणंतपत्तस्स ।
विणओ ठाणपउत्तो, दुक्खविमोक्खस्स मोक्खस्स " ॥ १ ॥

इह खलु षड्जीवनिकायिका नामाऽध्ययनमस्तीत्युक्तम्, सा च तेन भगवता श्रमणेन महावीरेण, कषाय-शत्रुजयान्महावीरः, उक्तञ्च—

" विदारयति यत्कर्म, तपसा च विराजते ।
तपोवीर्येण युक्तश्च, तस्माद्वीर इति स्मृतः " ॥ १ ॥

महांश्चासौ वीरश्चेति महावीरः, तेन महावीरेण, ' कासवेणं ' ति काश्यपगोत्रेण प्रवेदिता, नाऽन्यतः कुतश्चिदाकर्ण्य ज्ञाता किन्तर्हि ? स्वयमेव केवलाऽऽलोकेन प्रकर्षेण वेदिता प्रवेदिता विज्ञाता इत्यर्थः, तथा स्वाख्यातेति सदेवमनुष्याऽसुरायां पर्षदि सुष्ठु आख्याता, तथा सुप्रज्ञप्तेति सुष्ठु प्रज्ञप्ता तथैव सुष्ठु सूक्ष्मं परिहाराऽऽसेवनेन प्रकर्षेण सम्यगासेवितेत्यर्थः, [ अनेकार्थत्वाद्धातूनां ज्ञप्तिरासेवनार्थः ] तां चैवम्भूतां षड्जीवनिकायिकां श्रेयो मेऽध्येतुम्, श्रेयः पथ्यं—हितम्, ममेत्यात्मनिर्देशः, छान्दसत्वात् सामान्येन ममेत्यात्मनिर्देश इत्यन्ये । ततश्च श्रेय आत्मनोऽध्येतुं पठितुम्, कुतः ? इत्याह—'अध्ययनं धर्मप्रज्ञप्तिः' [ निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शनम्—इति वचनात्—हेतौ प्रथमा ] अध्ययनत्वात्—अध्यात्माऽऽनयनात्—चेतसो विशुद्ध्यापादनादित्यर्थः । एतदेव कुतः ? इत्याह—धर्मप्रज्ञप्तेः, प्रज्ञपनं—प्रज्ञप्तिः, धर्मस्य प्रज्ञप्तिर्धर्मप्रज्ञप्तिः, ततो धर्मप्रज्ञप्तेः कारणात्, चेतसो विशुद्ध्यापादनाच्च श्रेय आत्मनोऽध्येतुमिति । अन्येतु व्याचक्षते—'अध्ययनं धर्मप्रज्ञप्तिरिति, पूर्वोपन्यस्ताऽध्ययनस्यैवोपादेयतयाऽनुवादमानमेतदिति' ।

शिष्यः पृच्छति—'कतरा खल्वित्यादि' सूत्रमुक्तार्थमेव, अनेनैतद्दर्शयति—'विहायाऽभिमानं संविग्नेन शिष्येण सर्वकार्येष्वेव गुरुः प्रष्टव्य इति,' आचार्य आह—'इमा खलु'—इत्यादि सूत्रमुक्तार्थमेव, अनेनाऽप्येतद्दर्शयति—'गुणवते शिष्याय गुरुणाऽप्युपदेशो दातव्य एवेति,' 'त जहा—पुढवीकाइआ' इत्यादि, अत्र 'तद्यथे'त्युदाहरणोपन्यासार्थः, पृथ्वी—काठिन्यादिलक्षणा, सैव कायः शरीरं येषां ते पृथ्वीकायाः, एत एव पृथ्वीकायिकाः, [ स्वार्थिकष्ठक् ] एवं सर्वत्र ज्ञेयम् । आपो—द्रवाः प्रतीता एव । तेज—उष्णलक्षणम् । वायुश्चलनधर्मा । वनस्पतिर्लतादिरूपः । त्रसन-शीलास्त्रसाः । इह च सर्वभूताऽऽधारत्वात्पृथिव्याः प्रथमं पृथ्वीकायिकानामभिधानम्, तदनन्तरं तत्प्रतिष्ठितत्वादप्का-यिकानाम्, तदनन्तरं तत्प्रतिपक्षत्वात्तेजस्कायिकानाम्, तदनन्तरं तेजस उपष्टम्भकत्वाद्वायुकायिकानाम्, तदनन्तरं वायोः शाखाप्रचलनादिगम्यत्वाद्वनस्पतिकायिकानाम्, तदनन्तरं वनस्पतेस्त्रसोपग्राहकत्वात् त्रसकायिकानामिति । विप्रतिपत्तिनिरासाऽर्थं पुनराह——

**पुढवी चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अण्णत्थ सत्थपरिणएणं । आऊ चित्तमंत-मक्खाया अणेगजीवा पुढोसत्ता अण्णत्थ सत्थपरिणएणं । तेउ चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अण्णत्थ सत्थपरिणएणं । वाऊ चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अण्णत्थ सत्थपरिणएणं । वणस्सई चित्तमंतमक्खाया अणेगजीवा पुढोसत्ता अण्णत्थ सत्थपरिणएणं, तंजहा—अग्गबीआ, मूल-बीआ, पोरबीआ, खंधबीआ, बीअरुहा, सम्मुच्छिमा, तणलया, वणस्सइकाइआ सबीआ चित्तमंत-मक्खाया अणेगजीवा पुढोसत्ता अण्णत्थ सत्थपरिणएणं ।**

छा० पृथ्वी चित्तवत्याख्याता अनेकजीवा पृथक्सत्त्वा, अन्यत्र शस्त्रपरिणतायाः। आपश्चित्तवत्य आख्याता अनेकजीवाः पृथक्सत्त्वाः, अन्यत्र शस्त्रपरिणताभ्यः। तेजश्चित्तवदाख्यातमनेकजीवं पृथक्सत्त्वम्, अन्यत्र शस्त्रपरिणतात्। वायुश्चित्तवानाख्यातोऽनेकजीवः पृथक्सत्त्वः, अन्यत्र शस्त्रपरिणतात्। वनस्पतिश्चित्तवानाख्यातोऽनेकजीवः पृथक्सत्त्वः, अन्यत्र शस्त्रपरिणतात्। तद् (स) यथा-अग्रबीजाः, मूलबीजाः, पर्वबीजाः, स्कन्धबीजाः, बीजरुहाः, संमूर्च्छिमाः, तृणलताः, वनस्पतिकायिकाः सबीजाश्चित्तवन्त आख्याता अनेकजीवाः पृथक्सत्त्वाः, अन्यत्र शस्त्रपरिणतेभ्यः।

'पुढवी चित्तमंतमक्खाया०'–पृथ्वी चित्तवती–सचैतन्या–सजीवेत्यर्थः, पाठान्तरं वा–'पुढवी चित्तमत्तमक्खाया०'–अत्र 'मात्र' शब्दः स्तोकवाची, यथा सर्षपस्य त्रिभागमात्रं वटस्य बीजं रसातले न्यस्तं भवति महत्तर(तरु)हेतुः, तद्वत् पात्रेऽल्पमपि दानमिति। ततश्च चित्तमात्रा स्तोकचित्ता इत्यर्थः, तथा च प्रबलमोहोदयात्सर्वजघन्यं चैतन्यमेकेन्द्रियाणाम्, तदभ्यधिकं द्वीन्द्रियादीनामित्याख्यातं सर्वज्ञेन, इयञ्च अनेके जीवा यस्यां साऽनेकजीवा, न पुनरेकजीवा, यथा वैदिकानां 'पृथ्वी देवता' इत्येवमादि वचनप्रामाण्यादिति। अनेकजीवाऽपि केश्चिदेकभूताऽऽत्माऽपेक्षयेष्यत एव, यथाऽऽहुरेके–

"एक एव हि भूताऽऽत्मा, भूते भूते व्यवस्थितः।
एकधा बहुधा चैव, दृश्यते जलचन्द्रवत्" ॥ १ ॥

अत आह-पृथक्सत्त्वा(नि) आत्मानो यस्यां सा पृथक्-सत्त्वा, अङ्गुलासंख्येयभागमात्रावगाहनया पारमार्थिक्याऽनेकजीवसमाश्रिता-इति भावः। आह-'यद्येवं जीवपिण्डरूपा पृथ्वी ततस्तस्यामुच्चारादिकरणे नियमतस्तदतिपाताद्दहिंसकत्वाऽनुपपत्तेः, इत्यसम्भवी साधुधर्मः,' इत्यत्राऽऽह-'अन्यत्र शस्त्रपरिणतायाः,' शस्त्रपरिणता पृथ्वीं विहाय-परित्यज्य अन्या चित्तवत्याख्यातेत्यर्थः, स्वकायशस्त्रं कृष्णादिमृन्नीलादिमृदः शस्त्रम्, एवं गन्धरसस्पर्शभेदेऽपि शस्त्रयोजना कार्या, परकायशस्त्रं- पृथ्वी-अप्-तेजः-प्रभृतीनाम्, ते वा पृथिव्याः, उभयशस्त्रम्-यथा कृष्णा मृद् उदकस्य स्पर्शरसगन्धादिभिः पाण्डुरमृदश्च, यदा कृष्णमृदा कलुषितमुदकं भवति, तदाऽसौ कृष्णमृद् उदकस्य पाण्डुमृदश्च शस्त्रं भवति, एष तावदागमः। अनुमानमप्यत्र विद्यते-'साऽऽत्मका विद्रुमलवणोपलादयः पृथ्वीविकाराः समानजातीयाऽङ्कुरोत्पत्त्युपलम्भात्,' देवदत्तमांसाङ्कुरवत्। एवमागमोपपत्तिभ्यां व्यवस्थितं पृथ्वीकायिकानां जीवत्वम्, उक्तञ्च-

"आगमश्चोपपत्तिश्च, सम्पूर्णं दृष्टिलक्षणम्।
अतीन्द्रियाणामर्थानां, सद्भावप्रतिपादने" ॥ १ ॥
"आगमो ह्याप्तवचनम्, आप्तं दोषक्षयाद्विदुः।
वीतरागोऽनृतं वाक्यं, न ब्रूयाद्धेत्वसम्भवात्" ॥ २ ॥

आपश्चित्तवत्य आख्याताः, साऽऽत्मकं जलम्, भूमिखातस्वभावसम्भवात्, दर्दुरवत्, चित्तवत्। साऽऽत्मकोऽग्निः-आहारेण वृद्धिदर्शनाद्बालकवत्। चित्तवान् साऽऽत्मकः पवनः-अपरप्रेरिततिर्यगनियमितदिग्गमनात्, गोवत्।

सचेतनास्तरवः, सर्वत्वगपहरणे मरणात्, गर्दभवत् । वनस्पतिजीवविशेषप्रतिपादनायाऽऽह–' तंजहा अग्गबीआ ', इत्यादि, तद्यथेत्युपन्यासार्थः, अग्रं बीजं येषां तेऽग्रबीजाः–कोरण्टकादयः, मूलं बीजं येषां ते मूलबीजाः–उत्पलकन्दादयः, पर्व बीजं येषां ते पर्वबीजाः–इक्ष्वादयः, स्कन्धो बीजं येषां ते स्कन्धबीजाः–सल्लक्यादयः, बीजाद्रोहन्तीति बीजरुहाः–शाल्यादयः, संमूर्च्छन्तीति संमूर्च्छिमाः–प्रसिद्धबीजाभावेन पृथ्वीवर्षादिसमुद्भवास्तथाविधतृणादयः, न चैते न सम्भवन्ति, दग्धभूमावपि सम्भवात्, तृणलतादिग्रहणं स्वगताऽनेकभेदसंस्पर्शनार्थम्, वनस्पतिकायिकग्रहणं सूक्ष्मबादराद्यशेषवनस्पतिसंग्रहार्थम् । एतेन पृथिव्यादीनामपि स्वगताः पृथ्वीशर्करादयः, तथाऽवश्यायमिहिकादयः, तथाऽङ्गारज्वालादयः, तथा झंझामण्डलिकाऽऽदयो भेदाः सूचिता इति, सबीजाश्चित्तवन्त आख्याता इति । एतेऽनन्तरोदिता वनस्पतिविशेषाः सबीजाः स्वस्वनिबन्धनाश्चित्तवन्तः–आत्मवन्त आख्याताः । एते चाऽनेकजीवा इत्यादि ध्रुवगण्डिका पूर्ववत् । इदानीन्त्रसाऽधिकारे–एतदाह––

से जे पुण इमे अणेगे बहवे तसा पाणा । तंजहा–अंडया, पोअया, जराउआ, रसया, संसेइमा, संमुच्छिमा, उब्भिआ, उववाइआ, जेसिं केसिंचि पाणाणं अभिक्कंतं, पडिक्कंतं, संकुचितं, पसारिअं, रुअं, भंतं, तसिअं, पलाइअं, आगइगइविण्णाया जे अ कीडपयंगा जा य कुंथुपिवी(पी)लिआ, सव्वे बेइंदिआ, सव्वे तेइंदिआ, सव्वे चउरिंदिआ, सव्वे पंचिंदिआ, सव्वे तिरिक्खजोणिआ, सव्वे नेरइआ, सव्वे मणुआ, सव्वे देवा, सव्वे पाणा परमाहम्मिआ । एसो खलु छट्ठो जीवनिकाओ तसकाउत्ति पवुच्चइ ।

छा० अथ ये पुनरिमेऽनेके बहवस्त्रसाः प्राणाः, ते यथा-अण्डजाः, पोतजाः, जरायुजाः, रसजाः, संस्वेदिमाः, संमूर्च्छिमाः, उद्भिज्जाः, औपपातिकाः, येषां केषाञ्चित्प्राणिनामभिक्रान्तं, प्रतिक्रान्तं, सङ्कुचितं, प्रसारितं, रुतं, भ्रान्तं, त्रसितं, पलायितम्, आगतिगती विज्ञातारः, ये च कीटपतङ्गाः, याश्च कुन्थुपिपीलिकाः, सर्वे द्वीन्द्रियाः, सर्वे त्रीन्द्रियाः, सर्वे चतुरिन्द्रियाः, सर्वे पञ्चेन्द्रियाः, सर्वे तिर्यग्योनयः, सर्वे नैरयिकाः, सर्वे मनुजाः, सर्वे देवाः, सर्वे प्राणिनः परमधर्माणः। एष खलु षष्ठो जीवनिकायस्त्रसकाय इति प्रोच्यते।

'से जे पुण इमे०'–'से' शब्दोऽथशब्दार्थः, अथ ये पुनरमी बालादीनामपि प्रसिद्धा अनेके द्वीन्द्रियादिभेदेन बहव एकस्यां जातौ त्रसाः प्राणिनः– 'त्रस्यन्तीति त्रसाः' प्राणा उच्छ्वासादय एषां विद्यन्त इति प्राणिनः, तद्यथा– 'अंडजा' इत्यादि, एष खलु षष्ठो जीवनिकायस्त्रसकायः प्रोच्यत इति योगः, तत्र अण्डाज्जाता अण्डजाः–पक्षिगृहकोकिलादयः, पोतादिव जायन्ते पोतजाः, ते च हस्तिवल्गुलीचर्मजलौकाप्रभृतयः, जरायुवेष्टिता जायन्ते जरायुजाः–गोमहिष्यजाविकमनुष्यादयः, रसाज्जाता रसजाः–आरनालदधितेमनादिषु पायुकृम्याकृतयोऽतिसूक्ष्मा भवन्ति, संस्वेदाज्जाताः संस्वेदजाः–मत्कुणयूकादयः, संमूर्च्छनाज्जाताः संमूर्च्छनजाः–शलभ-पिपीलिका-मक्षिका-शालूकादयः, उद्भेदजाः–पतङ्ग-खञ्जरीट-पारिप्लवादयः, उपपातजाः–देवा नारकाश्च, एतेषामेव लक्षणमाह–'येषां केषाञ्चित् सामान्येनैव प्राणिनां जीवानामभिक्रान्तं–प्रज्ञापकं

प्रत्यभिमुख क्रमणमित्यर्थः,' एवं प्रतिक्रमणं–प्रतिक्रान्तं–प्रज्ञापकात् क्रमणमिति भावः, सङ्कुचनं–सङ्कुचितं गात्रसङ्कोचकरणम्, प्रसारणं–प्रसारितं गात्रविततीकरणम्, रवणं–रुत शब्दकरणम्, भ्रान्तमितश्चेतश्च गमनम्, त्रसनं–त्रस्तं दुःखोद्वेजनम्, पलायनं–पलायितं कुतश्चिन्नाशनम्, तथा–आगतेः कुतश्चित् क्वचित्, गतेश्च कुतश्चित् क्वचिदेव, "विण्णाया" इति विज्ञातारः । आह–'अभिक्रान्तप्रतिक्रान्ताभ्यां नाऽऽगतिगत्योः क्वचिद्भेदः,' इति किमर्थं भेदेनाऽभिधानम् ? उच्यते–विज्ञानविशेषख्यापनार्थम्, एतदुक्तं भवति–य एव विजानन्ति यथा वयमभिक्रामामः प्रतिक्रामामो वा त एव त्रसाः, ननु वृत्तिं प्रत्यभिक्रमणप्रतिक्रमणवन्तोऽपि वल्ल्यादय इति ? आह–एवमपि द्वीन्द्रियादीनामत्रसत्वप्रसङ्गः, अभिक्रमणप्रतिक्रमणभावेऽप्येवं विज्ञानाभावात्, नैतदेवम्, हेतुसंज्ञाया अवगतेः, बुद्धिपूर्वकमिव छायात उष्णम्, उष्णाद्वा छायां प्रति तेषामभिक्रमणादिभावात्, न चैवं वल्ल्यादीनामभिक्रमणादि, ओघसंज्ञायाः प्रवृत्तेरिति । त्रसभेदानाह–'जे अ कीड' इत्यादि, ये च कीटपतङ्गा इत्यत्र कीटाः कृमयः [ एकग्रहणेन तज्जातीयग्रहणमिति ], द्वीन्द्रियाः–शङ्खादयोऽपि, पतङ्गाः–शलभाः, अत्राऽपि पूर्ववत्, चतुरिन्द्रिया भ्रमरादयो गृह्यन्ते । तथा याश्च कुन्थुपिपीलिका इत्यनेन त्रीन्द्रियाः सर्वे एव गृह्यन्ते, अतएवाह–सर्वे द्वीन्द्रियाः–कृम्यादयः, सर्वे त्रीन्द्रियाः–कुन्थ्वादयः, सर्वे चतुरिन्द्रियाः–पतङ्गादयः । आह–'ये च कीटपतङ्गा इत्यादौ–उद्देशव्यत्ययः किमर्थः ? उच्यते–विचित्रा सूत्रगतिः, अतन्त्रः क्रम इति ज्ञापनार्थम्', सर्वे पञ्चेन्द्रियाः सामान्यतः, विशेषतस्तिर्यग्योनयो–गवादयः, सर्वे नारकाः–रत्नप्रभानारकादिभेदभिन्नाः, सर्वे मनुजाः–कर्मभूमिजादयः, सर्वे देवाः–भवनवास्यादयः । सर्वशब्दश्चाऽत्र अपरिशेषभेदानां त्रसत्वख्यापनार्थः, सर्व एवैते त्रसाः, न त्वेकेन्द्रिया इव त्रसाः स्थावराश्चेति, 'सर्वे

प्राणिनः परमधर्माण इति' सर्वे प्राणिनो द्वीन्द्रियादयः पृथ्व्यादयश्च, परमं—सुखं तद्धर्माणः सुखाभिलाषिण इत्यर्थः ।

एष खल्वनन्तरोदितः कीटादिः षष्ठो जीवनिकायः, पृथिव्यादिपञ्चकाऽपेक्षया षष्ठत्वमस्य, त्रसकाय इति 'प्रोच्यते' प्रकर्षेणोच्यते सर्वैरेव तीर्थङ्करगणधरैरितिप्रयोगार्थः, प्रयोगश्च—विद्यमानकर्तृकमिदं शरीरम् आदिमत् प्रतिनियताऽऽकारत्वात्, घटवत् । आह—इदं त्रसकायनिगमनमनभिधायाऽस्थाने सर्वे प्राणिनः परमधर्माण इत्यनन्तर-सूत्रसम्बन्धि सूत्राऽभिधानं किमर्थम् ? उच्यते-निगमनसूत्रव्यवधानवत्, अर्थान्तरेण व्यवधानख्यापनार्थम्, तथाहि—त्रसकायनिगमनसूत्राऽवसानो जीवाऽभिगमः, अत्राऽन्तरे—अजीवाभिगमाधिकारः, तदर्थमभिधाय चारित्रधर्मो वक्तव्यः, तथा च वृद्धव्याख्या—"ऐसो० तस० पवुच्चइ० एस जीवाभिगमो भणितो, इआणीं अजीवाभिगमो भण्णति, अजीवा दुविहा, तंजहा—पोग्गला य, णो पोग्गला य, पोग्गला छव्विहा, तंजहा—सुहुमसुहुमा १, सुहुमा २, सुहुमबायरा ३, बायरसुहुमा ४, बायरा ५, बायरबायरा ६ । सुहुमसुहुमा परमाणुपोग्गला १, सुहुमा दुपएसिआओ आढत्तो जाव सुहुमपरिणओ अणंतपदेसिओ खंधो २, सुहुमबायरा गंधपोग्गला ३, बायरसुहुमा वाउकायसरीरा ४, बायरा आउ-कायसरीरा उस्सादीणं ५, बायरबायरा तेउवणप्फदिपुढवीतससरीराणि ६ । अहवा चउव्विहा पोग्गला, तंजहा—खंधा १, खंधदेसा २, खंधपदेसा ३, परमाणुपोग्गला ४, एस पोग्गलत्थिकाओ गहणलक्खणो । णो पोग्गलत्थिकाओ तिविहो, तंजहा-धम्मत्थिकाओ १, अधम्मत्थिकाओ २, आगासत्थिकाओ ३, तत्थ धम्मत्थिकाओ गतिलक्खणो,



१ 'एसो खलु छट्ठो जीवनिकाओ तसकाउत्ति पवुच्चइ' इति पूर्णः पाठः ।

अधम्मत्थिकाओ ठितिलक्खणो, आगासत्थिकाओ अवगाहलक्खणो" उक्तोऽजीवाभिगमः । अथ चारित्रधर्मः, तत्रोक्तसम्बन्धमेवेदं सूत्रम्–

**इच्चेसिं छण्हं जीवनिकायाणं नेव सयं दंडं समारंभिज्जा नेवण्णेहिं दंडं समारंभाविज्जा दंडं समारंभंते वि अण्णे न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि । तस्स भंते ! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि ।**

**छा० इत्येतेषां षण्णां जीवनिकायानां नैव स्वयं दण्डं समारभेत, नैवान्यैर्दण्डं समारम्भयेत, दण्डं समारभमाणानप्यन्यान्न समनुजानीयात् । यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन (उक्तस्वरूपेण दण्डं) न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि । तस्य भदन्त ! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि ।**

'इच्चेसिं०'– एतेषां षण्णां जीवनिकायानां नैव स्वयं दण्डं समारभेत, इति योगः । 'सर्वे प्राणिनः परमधर्माणः' इत्यनेन हेतुना एतेषां षण्णां जीवनिकायानामिति [सुपां सुपो भवन्तीति सप्तम्यर्थे षष्ठी] एतेषु षट्सु जीवनिकायेषु नैव स्वयं दण्डं संघट्टनपरितापनादिलक्षणं समारभेत–प्रवर्तयेत्, नैवाऽन्यैः प्रेष्यादिभिः समारम्भयेत कारयेदित्यर्थः,– 'अण्णे न समणुजाणिज्जा'त्ति' पाठः शुद्धः, दण्डं समारभमाणा-

नप्यन्यान् प्राणिनो न समनुजानीयात्—नानुमोदयेदिति विधायकं भगवद्वचनम्। यतश्चैवमतो 'यावज्जीवमित्यादि यावद् व्युत्सृजामि' इत्येवमिदं सम्यक् प्रतिपद्येत, इत्यैदम्पर्यं, पदार्थस्तु—'जीवनं जीवो यावज्जीवाद् यावज्जीवम्'—आप्राणोपरमादित्यर्थः। किमित्याह—'त्रिविधं त्रिविधेनेति' तिस्रो (विधाः) विधानानि कृतादिरूपा अस्येति त्रिविधो दण्ड इति गम्यते, तं त्रिविधेन करणेन, एतदेवोपन्यस्यति—'मनसा, वाचा, कायेन' अस्य च करणस्य कर्म उक्तलक्षणो दण्डः, तं वस्तुतो निराकार्यतया सूत्रेणैवोपन्यस्यन्नाह—'न करोमि स्वयं, न कारयाम्यन्यैः, कुर्वन्तमप्यन्यं न समनुजानामीति', तस्य भदन्त! प्रतिक्रामामि, इति। तस्येत्यधिकृतो दण्डः सम्बध्यते, [सम्बन्धलक्षणा—अवयवलक्षणा षष्ठी] योऽसौ त्रिकालविषयो दण्डस्तस्य सम्बन्धिनमतीतमवयवं प्रतिक्रामामि, न वर्तमानमनागतं वा, अतीतस्यैव प्रतिक्रमणात्, प्रत्युत्पन्नस्य संवरणात्, अनागतस्य प्रत्याख्यानात्, इति। भदन्त! इति गुरोरामन्त्रणम्, एतच्च गुरुसाक्षिक्येव व्रत-प्रतिपत्तिः साध्वीति ज्ञापनार्थम्, प्रतिक्रामामीति भूतदण्डान्निवर्तेऽहमित्युक्तं स्यात्, तस्माच्च निवृत्तिर्यत्तदनुमतेर्विरमणमिति। तथा निन्दामि गर्हामि(गर्हे)—इत्यत्रात्मसाक्षिकी निन्दा, परसाक्षिकी गर्हा—जुगुप्सोच्यते, आत्मानमतीतदण्डकारिणम्—अश्लाघ्यं व्युत्सृजामि—'वि' शब्द उच्छब्दो भृशार्थः, सृजामीति त्यजामि, ततश्च भृशं त्यजामि व्युत्सृजामीति। आह—यद्येवमतीतदण्डप्रतिक्रमणमात्रमस्य ऐदम्पर्यम्, न प्रत्युत्पन्नसंवरणम्, अनागतप्रत्याख्यानञ्चेति, नैतदेवम्, करोमीत्यादिना तदुभयसिद्धेरिति।

अयञ्चाऽऽत्मप्रतिपत्त्यर्हो दण्डनिक्षेपः सामान्यविशेषरूप इति, सामान्येनोक्तलक्षण एव, स एव विशेषतः पञ्चमहाव्रतरूपतयाऽङ्गीकर्तव्य इति महाव्रतान्याह—

पढमे भंते! महव्वए पाणाइवायाओ वेरमणं। सव्वं भंते! पाणाइवायं पच्चक्खामि से सुहुमं वा बायरं वा तसं वा थावरं वा, नेव सयं पाणे अइवाइज्जा नेवण्णेहिं पाणे अइवायाविज्जा पाणे अइ-वायंते वि अण्णे न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं वि अण्णं न समणुजाणामि। तस्स भंते! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि। पढमे भंते! महव्वए उवट्ठिओम्मि सव्वाओ पाणाइवायाओ वेरमणं ॥ १ ॥

छा०प्रथमे भदन्त! महाव्रते प्राणातिपाताद्विरमणम्। सर्वं भदन्त! प्राणातिपातं प्रत्याख्यामि, अथ सूक्ष्मं वा बादरं वा त्रसं वा स्थावरं वा, नैव स्वयं प्राणानतिपातयेत्, नैवान्यैः प्राणानतिपातयेत्, प्राणानतिपातयतोऽप्यन्यान्न समनुजानीयात्। (उक्तस्वरूपं) यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि। तस्य भदन्त! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि। प्रथमे भदन्त! महाव्रते उपस्थितोऽस्मि, सर्वस्मात् प्राणाति-पाताद्विरमणम् ॥ १ ॥

१ यहांपर वृत्तिकारने 'तिङां तिङो भवन्तीति न्यायात्' इस तरह समाधान करके 'वर्तमान'में 'विधि' का प्रयोग माना है, मैंनेभी छायामें और अनुवादमें मूलग्राही अनुसरण किया है।

'पढमे भंते०'—इत्याह, 'प्रथमे भदन्त! महाव्रते प्राणातिपाताद्विरमणमिति' प्राणा इन्द्रियादयः, तेषा मतिपातः, तस्माद्विरमणं निवर्तनं भगवतोक्तमिति शेषः, यतश्चैवमतः सर्वं भदन्त! प्राणातिपातं प्रत्याख्यामि, 'प्रति' शब्दः प्रतिषेधे, आङ् आभिमुख्ये, ख्या प्रकथने, प्रतीपमभिमुखं ख्यापनं प्राणातिपातस्य करोमि, प्रत्याख्यामि इति, अथवा प्रत्याचक्षे—संवृताऽऽत्मा, साम्प्रतमनागतप्रतिषेधस्याऽऽदरेणाऽभिधानं करोमीत्यर्थः। 'से' शब्दो मागधदेशी प्रसिद्धोऽथशब्दार्थः, स चोपन्यासे, सूक्ष्मोऽल्पः परिगृह्यते, न तु सूक्ष्मनामकर्मोदयात्सूक्ष्मः, तस्य कायेन व्यापादनाऽसम्भवात्, तदेतद्विशेषतोऽभिधित्सुराह—"बादरोऽपि स्थूरः, बादर इति स्थूरो गृह्यते, न तु बादरनामकर्मोदयाद्बादरः, अपि शब्दाद् यथा सूक्ष्मोऽल्पस्तथा बादरः स्थूर इति", सचैकैको द्विधा—त्रसः स्थावरश्च, सूक्ष्मत्रसः कुन्थ्वादिः, स्थावरो वनस्पत्यादिः, बादरत्रसो गवादिः, स्थावरः पृथिव्यादिः, एतान् 'नेव सयं पाणे अइवाएज्जाति' [ प्राकृतशैल्या छान्दसत्वात् तिङां तिङो भवन्तीति न्यायात् ] नैव स्वयं प्राणिनोऽतिपातयामि, नैवाऽन्यैः प्राणिनोऽतिपातयामि, प्राणिनोऽतिपातयतोऽप्यन्यान्न समनुजानामि, यावज्जीवमित्यादि पूर्ववत्। व्रतप्रतिपत्तिं निगमयन्नाह—'प्रथमे भदन्त! महाव्रते उपस्थितोऽस्मि', उपसामीप्येन तत्परिणामाऽऽपत्त्या स्थितः, इत आरभ्य मम सर्वस्मात् प्राणातिपाताद्विरमणमिति। भदन्त! इत्यनेन च आदिमध्यावसानेषु गुरुमनापृच्छ्य न किञ्चित्कर्तव्यम्, कृतञ्च तस्मै निवेदनीयम्, एवन्तदाराधितं भवति ॥ १ ॥

अहावरे दुच्चे भंते! महव्वए मुसावायाओ वेरमणं। सव्वं भंते! मुसावायं पच्चक्खामि, से कोहा वा लोहा वा भया वा हासा वा, नेव सयं मुसं वइज्जा नेवण्णेहिं मुसं वायाविज्जा मुसं वयंते वि

अण्णे न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि। तस्स भंते! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि। दुच्चे भंते! महव्वए उवट्ठिओमि सव्वाओ मुसावायाओ वेरमणं ॥ २ ॥



छा० अथापरस्मिन्द्वितीये भदन्त! महाव्रते मृषावादाद्विरमणम्। सर्वं भदन्त! मृषावादं प्रत्याख्यामि, अथ क्रोधाद्वा लोभाद्वा भयाद्वा हासाद्वा, नैव स्वयं मृषां वदेत, नैवाऽन्यैर्मृषां वादयेत्, मृषां वदतोऽप्यन्यान्न समनुजानीयात्, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि। तस्य भदन्त! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि। द्वितीये भदन्त! महाव्रते उपस्थितोऽस्मि, सर्वस्मान्मृषावादाद्विरमणम् ॥ २ ॥

'से कोहा वा०'—क्रोधाद्वा लोभाद्वा इत्यनेन आद्यन्तग्रहणान्मानमायापरिग्रहः, भयाद्वा हास्याद्वा इत्यनेन तु प्रेमद्वेषकलहाऽभ्याख्यानादिपरिग्रहः, नैव स्वयं मृषां वदामि, नैवाऽन्यैर्मृषां वादयामि, मृषां वदतोऽप्यन्यान्न समनुजानामीति ॥ २ ॥

अहावरे तच्चे भंते! महव्वए अदिण्णादाणाओ वेरमणं। सव्वं भंते! अदिण्णादाणं पच्चक्खामि, से गामे वा नगरे वा रण्णे वा अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा, नेव सयं अदिण्णं गिण्हिज्जा नेवण्णेहिं अदिण्णं गिण्हाविज्जा अदिण्णं गिण्हंते वि अण्णे न समणुजाणिज्जा,

जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि। तस्स भंते! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि। तच्चे भंते! महव्वए उवट्ठिओमि सव्वाओ अदिण्णादाणाओ वेरमणं ॥ ३ ॥

छा० अथापरस्मिन्तृतीये भदन्त! महाव्रतेऽदत्तादानाद्विरमणम्। सर्वं भदन्त! अदत्तादानं प्रत्याख्यामि, अथ ग्रामे वा नगरे वाऽरण्ये वाऽल्पं वा बहु वाऽणु वा स्थूलं वा चित्तवद्वाऽचित्तवद्वा, नैव स्वयमदत्तं गृह्णीयात्, नैवाऽन्यैरदत्तं ग्राहयेत्, अदत्तं गृह्णतोऽप्यन्यान्न समनुजानीयात्, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि। तस्य भदन्त! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि। तृतीये भदन्त! महाव्रते उपस्थितोऽस्मि, सर्वस्मादृदत्तादानाद्विरमणम् ॥ ३ ॥

'से गामे वा०'–ग्रामे वा, नगरे वा, अरण्ये वा, इत्यनेन क्षेत्रपरिग्रहः, तत्र ग्रसति बुद्ध्यादीन् गुणानिति ग्रामः, नाऽस्मिन् करो विद्यते इति नकरम्, अरण्यं काननादि, तथाऽल्पं वा, बहु वा, अणु वा, स्थूलं वा, चित्तवद्वा, अचित्तवद्वा, इत्यनेन द्रव्यपरिग्रहः, तत्राऽल्पं मूल्यत एरण्डकादि, बहु वस्त्रादि, अणु प्रमाणतो वस्त्रादि, स्थूलमेरण्डकाष्ठादि, एतच्च चित्तवद्वा अचित्तवद्वेति चेतनाऽचेतनमित्यर्थः। 'णेव सयं अदिण्णं गिण्हिज्जात्ति'– नैव स्वयमदत्तं गृह्णामि, नैवाऽन्यैरदत्तं ग्राहयामि, अदत्तं गृह्णतोऽप्यन्यान् न समनुजानामि, इत्येतद् यावज्जीव-मित्यादि ॥ ३ ॥

अहावरे चउत्थे भंते ! महव्वए मेहुणाओ वेरमणं । सव्वं भंते ! मेहुणं पच्चक्खामि, से दिव्वं वा माणुसं वा तिरिक्खजोणिअं वा, नेव सयं मेहुणं सेविज्जा, नेवण्णेहिं मेहुणं सेवाविज्जा, मेहुणं सेवंते वि अण्णे न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि । तस्स भंते ! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि । चउत्थे भंते ! महव्वए उवट्ठिओमि सव्वाओ मेहुणाओ वेरमणं ॥ ४ ॥

छा०अथापरस्मिंश्चतुर्थे ! भदन्त महाव्रते मैथुनाद्विरमणम् । सर्वं भदन्त ! मैथुनं प्रत्याख्यामि, अथ दिव्यं वा मानुष्यं वा तैर्यग्योनं वा, नैव स्वयं मैथुनं सेवेत, नैवान्यैर्मैथुनं सेवयेत, मैथुनं सेवमानानप्यन्यान्न समनुजानीयात, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि । तस्य भदन्त ! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि । चतुर्थे भदन्त ! महाव्रते उपस्थितोऽस्मि, सर्वस्मान्मैथुनाद्विरमणम् ॥ ४ ॥

'से दिव्वं०'– दैवं वा मानुषं वा तैर्यग्योनं वा, 'नेव सयं मेहुणं सेविज्जात्ति'– नैव स्वयं मैथुनं सेवे, नैवाऽन्यैर्मैथुनं सेवयामि, मैथुनं सेवमानानप्यन्यान् न समनुजानामीत्येतद् यावज्जीवमित्यादि ॥ ४ ॥



अहावरे पंचमे भंते ! महव्वए परिग्गहाओ वेरमणं । सव्वं भंते ! परिग्गहं पच्चक्खामि, से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा, नेव सयं परिग्गहं परिगिण्हिज्जा, नेव-

ण्णेहिं परिग्गहं परिगिण्हाविज्जा, परिग्गहं परिगिण्हंते वि अण्णे न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि। तस्स भंते! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि। पंचमे भंते! महव्वए उवट्ठिओमि सव्वाओ परिग्गहाओ वेरमणं ॥ ५ ॥

छा०अथापरस्मिन् पञ्चमे भदन्त! महाव्रते परिग्रहाद्विरमणम्। सर्वं भदन्त! परिग्रहं प्रत्याख्यामि, अथाऽल्पं वा बहुं वाऽणुं वा स्थूलं वा चित्तवन्तं वाऽचित्तवन्तं वा, नैव स्वयं परिग्रहं परिगृह्णीयात्, नैवाऽन्यैः परिग्रहं परिग्राहयेत्, परिग्रहं परिगृह्णतोऽप्यन्यान्न समनुजानीयात्, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि। तस्य भदन्त! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि। पञ्चमे भदन्त! महाव्रते उपस्थितोऽस्मि, सर्वस्मात्परिग्रहाद्विरमणम् ॥ ५ ॥

'से अप्पं वा०'—अल्पं वेत्यादि, व्याख्या पूर्ववज्ज्ञेया, 'नेव सयं परिग्गहं परिगिण्हिज्जात्ति'—नैव स्वयं परिग्रहं परिगृह्णामि, नैवाऽन्यैः परिग्रहं परिग्राहयामि, परिग्रहं परिगृह्णतोऽप्यन्यान् न समनुजानामि, इत्येतद् यावज्जीवमित्यादि ॥ ५ ॥



अहावरे छट्ठे भंते! वए राइभोअणाओ वेरमणं। सव्वं भंते! राइभोअणं पच्चक्खामि, से असणं वा पाणं वा खाइमं वा साइमं वा, नेव सयं राइं भुंजिज्जा, नेवण्णेहिं राइं भुंजाविज्जा, राइं

भुंजंते वि अण्णे न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि । तस्स भंते ! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि । छट्ठे भंते ! वए उवट्ठिओमि सव्वाओ राइभोअणाओ वेरमणं ॥ ६ ॥

छा० अथापरस्मिन् षष्ठे भदन्त ! व्रते रात्रिभोजनाद्विरमणम् । सर्वं भदन्त ! रात्रिभोजनं प्रत्याख्यामि, अथाशनं वा पानं वा खाद्यं वा स्वाद्यं वा, नैव स्वयं रात्रौ भुञ्जीत, नैवाऽन्यान्रात्रौ भोजयेत्, रात्रौ भुञ्जानानप्यन्यान्न समनुजानीयात्, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि । तस्य भदन्त ! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि । षष्ठे भदन्त ! व्रते उपस्थितोऽस्मि, सर्वस्माद्रात्रिभोजनाद्विरमणम् ॥ ६ ॥

'से असणं०'—अशनं वा पानं वा खाद्यं वा स्वाद्यं वा, अश्यत इत्यशनम्—ओदनादि, पीयत इति पानं—मृद्वीकापानादि, खाद्यत इति खाद्यं—खर्जूरादि, स्वाद्यत इति स्वाद्यं—ताम्बूलादि, 'नेव सयं राइं भुंजिज्जा'—नैव स्वयं रात्रौ भुञ्जे, नैवाऽन्यान् रात्रौ भोजयामि, रात्रौ भुञ्जानानप्यन्यान् न समनुजानामि, इत्येतद् यावज्जीवमित्यादि पूर्ववत्, सर्वत्र ज्ञेयम् ॥ ६ ॥ समस्तमताऽभ्युपगमख्यापनायाऽऽह—

इच्चेआइं पंचमहव्वयाइं राइभोअणवेरमणछट्ठाइं अत्तहिअट्ठाए उवसंपज्जित्ताणं विहरामि ।
छा० इत्येतानि पञ्च महाव्रतानि रात्रिभोजनविरमणषष्ठानि-आत्महितार्थायोपसम्पद्य विहरामि ।

'इच्चेआई०'–इत्येतानि पञ्चमहाव्रतानि रात्रिभोजनविरमणषष्ठानि, किमित्याह–आत्महिताय–आत्महितो मोक्षः, तदर्थम्, अनेन अन्याऽर्थं तत्त्वतो व्रताऽभावमाह, तदभिलापाऽनुमत्या हिंसादावनुमत्यादिभावात्, उपसम्पद्य–सामीप्येनाऽङ्गीकृत्य व्रतानि विहरामि–सुसाधुविहारेण, तदभावेऽङ्गीकृतानामपि व्रतानामभावात् । उक्तश्चारित्रधर्मः, साम्प्रतं यतनाया अवसरः, तथा चाऽऽह–



से भिक्खू वा, भिक्खुणी वा, संजय–विरय–पडिहय–पच्चक्खाय–पावकम्मे, दिआ वा, राओ वा, एगओ वा, परिसागओ वा, सुत्ते वा, जागरमाणे वा, से पुढवीं वा, भित्तिं वा, सिलं वा, लेलुं वा, ससरक्खं वा कायं, ससरक्खं वा वत्थं, हत्थेण वा, पाएण वा, कट्ठेण वा, कलिंचेण वा, अंगुलिआए वा, सिलागाए वा, सिलागहत्थेण वा, न आलिहिज्जा, न विलिहिज्जा, न घट्टिज्जा, न भिंदिज्जा, अण्णं न आलिहाविज्जा, न विलिहाविज्जा, न घट्टाविज्जा, न भिंदाविज्जा, अण्णं आलिहंतं वा विलिहंतं वा घट्टंतं वा भिंदंतं वा न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि । तस्स भंते ! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि ॥ १ ॥



छा० स भिक्षुर्वा, भिक्षुकी वा, संयत–विरत–प्रतिहत–प्रत्याख्यात–पापकर्मा, दिवा वा, रात्रौ वा, एककी वा, परिषद्गतो वा, सुप्तो वा, जाग्रद्वा, स पृथ्वीं वा, भित्तिं वा, शिलां वा, लेष्टुं

वा, सरजस्कं वा कायं, सरजस्कं वा वस्त्रं, हस्तेन वा, पादेन वा, काष्ठेन वा, कलिञ्जेन (कलिङ्गेन) वा, अङ्गुल्या वा, शलाकया वा, शलाकाहस्तेन वा, नालिखेत्, न विलिखेत्, न घट्टयेत्, न भिन्द्यात्, अन्येन नालेखयेत्, न विलेखयेत्, न घट्टयेत्, न भेदयेत्, अन्यमालिखन्तं वा, विलिखन्तं वा, घट्टयन्तं वा, भिन्दन्तं वा, न समनुजानीयात्, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि। तस्य भदन्त! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि ॥ १ ॥

'से भिक्खू वा०'—स इति निर्देशे, स योऽसौ महाव्रतयुक्तः, 'भिक्षुर्वा भिक्षुकी वा'—आरम्भत्यागाद् धर्मकाय–पालनाय भिक्षणशीलो भिक्षुः, एवं भिक्षुक्यपि, पुरुषोत्तमो धर्म इति स विशि(शे)ष्यते, तद्विशेषणानि च भिक्षुक्या अपि द्रष्टव्यानि, इत्याह—'संयत–विरत–प्रतिहत–प्रत्याख्यात–पापकर्मा,'—तत्र सामस्त्येन यतः संयतः—सप्तदशप्रकारसंयमोपेतः, विविधमनेकधा द्वादशविधे तपसि रतो विरतः, प्रतिहत–प्रत्याख्यात–पापकर्मेति–प्रतिहतं स्थितिह्रासतो ग्रन्थिभेदेन, प्रत्याख्यातं—हेत्वभावतः पुनर्वृद्ध्यभावेन पापं कर्म—ज्ञानावरणीयादि येन स तथाविधः, 'दिवा वा रात्रौ वा एको वा परिषद्गतो वा सुप्तो वा जाग्रद्वा,' रात्रौ सुप्तो दिवा जाग्रत्, कारणिक एकः शेषकालं परिषद्गतः, इदं वक्ष्यमाणं न कुर्यात्, 'से पुढ०'—तदर्थः 'से' शब्दः, 'पृथ्वीं वा, भित्तिं वा, शिलां वा, लेष्टुं वा'—तत्र पृथ्वी—लोष्टादिविरहिता, भित्तिर्नदीतटी, शिला—विशालः पाषाणः, लोष्टः प्रसिद्धः, तथा सहरजसा—अरण्यपांशुलक्षणेन वर्तत इति सरजस्कः, तं सरजस्कं वा कायं, तथा सरजस्कं वा वस्त्रं—चोलपट्टकादि,

एतत्किमित्याह–हस्तेन वा, पादेन वा, काष्ठेन वा, कलिञ्चेन वा–क्षुद्रकाष्ठरूपेण, अङ्गुल्या वा, शलाकया वा–अयः–शलाकादिरूपया, शलाकाहस्तेन वा शलाकासङ्घातरूपेण । 'नालिहिज्जत्ति'–'नाऽऽलिखेत्, न विलिखेत्, न घट्टयेत्, न भिन्द्यात्'–तत्रेषत्सकृद्वाऽऽलेखनम्, नितरामनेकशो वा विलेखनम्, घट्टनं–चालनम्, भेदो विदारणम्, एतत्स्वयं न कुर्यात् ( अन्यमन्येन वा नालेखयेत् ), न विलेखयेत्, न घट्टयेत्, न भेदयेत्, तथाऽन्यं स्वत एवाऽऽलिखन्तं वा विलिखन्तं वा घट्टयन्तं वा भिन्दन्तं वा न समनुजानीयात्, इत्यादि पूर्ववत् ॥ १ ॥

से भिक्खू वा, भिक्खुणी वा, संजय–विरय–पडिहय–पच्चक्खाय–पावकम्मे, दिआ वा, राओ वा, एगओ वा, परिसागओ वा, सुत्ते वा, जागरमाणे वा, से उदगं वा, ओसं वा, हिमं वा, महिअं वा, करगं वा, हरतणुगं वा, सुद्धोदगं वा, उदउल्लं वा कायं, उदउल्लं वा वत्थं, ससिणिद्धं वा कायं, ससिणिद्धं वा वत्थं, न आमुसिज्जा, न संफुसिज्जा, न आवीलिज्जा, न पवीलिज्जा, न अक्खोडिज्जा, न पक्खोडिज्जा, न आयाविज्जा, न पयाविज्जा, अण्णं न आमुसाविज्जा, न संफुसाविज्जा, न आवीलाविज्जा, न पवीलाविज्जा, न अक्खोडाविज्जा, न पक्खोडाविज्जा, न आयाविज्जा, न पयाविज्जा, अण्णं आमुसंतं वा संफुसंतं वा आवीलंतं वा पवीलंतं वा अक्खोडंतं वा पक्खोडंतं वा आयावंतं वा पयावंतं वा न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि । तस्स भंते ! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि ॥ २ ॥

छा० स भिक्षुर्वा, भिक्षुकी वा, संयत-विरत-प्रतिहत-प्रत्याख्यात-पापकर्मा, दिवा वा, रात्रौ वा, एकको वा, परिषद्गतो वा, सुप्तो वा, जाग्रद्वा, स उदकं वा, अवश्यायं वा, हिमं वा, मिहिकां वा, करकं वा, हरतनुकं वा, शुद्धोदकं वा, उदकार्द्रं वा कायं, उदकार्द्रं वा वस्त्रं, सस्निग्धं वा कायं, सस्निग्धं वा वस्त्रं, नामृशेत्, न संस्पृशेत्, नाऽऽपीडयेत्, न प्रपीडयेत्, नाऽऽस्फोटयेत्, न प्रस्फोटयेत्, नाऽऽतापयेत्, न प्रतापयेत्, अन्येन नाऽऽमर्षयेत्, न संस्पर्शयेत्, नाऽऽपीडयेत्, न प्रपीडयेत्, नाऽऽस्फोटयेत्, न प्रस्फोटयेत्, नाऽऽतापयेत्, न प्रतापयेत्, अन्यमामृशन्तं वा, संस्पृशन्तं वा, आपीडयन्तं वा, प्रपीडयन्तं वा, आस्फोटयन्तं वा, प्रस्फोटयन्तं वा, आतापयन्तं वा, प्रतापयन्तं वा, न समनुजानीयात्, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि। तस्य भदन्त! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि ॥ २ ॥

'से भिक्खू वा०'—इत्यादि यावत् 'जागरमाणे वात्ति' पूर्ववदेव। 'से उदगं वा०'—तद्यथा—'उदकं वा, अवश्यायं वा, हिमं वा, मिहिकां वा, करकं वा, हरतनुं वा, शुद्धोदकं वा,' तत्रोदकं—सिरापानीयम्, अवश्यायः—स्नेहः, हिमं-स्त्यानोदकम्, मिहिका—धूमिका, करकः—कठिनोदककाः, हरतनुर्भुवमुद्भिद्य तृणाग्रादिषु भवति, शुद्धोदकम्—अन्तरिक्षोदकम्, तथा 'उदकार्द्रं वा कायम्, उदकार्द्रं वा वस्त्रम्,' उदकार्द्रता चेह गलद्बिन्दुतुषाराद्यनन्तरोदितोदकभेदसंमिश्रता। तथा 'सस्निग्धं वा कायं, सस्निग्धं वा वस्त्रम्' [अत्र स्नेहनं स्निग्धमिति भावे क्त—प्रत्ययः] सह स्निग्धेन वर्तत इति सस्निग्धः सस्निग्धं वा, सस्निग्धता चेह बिंदुरहिताऽनन्तरोदितोदकभेदसंमिश्रता।

एतत्किमित्याह–'नामुसिज्जाचि'–'नामृषेत्, न संस्पृशेत्, नाऽऽपीडयेत्, न प्रपीडयेत्, नाऽऽस्फोटयेत्, न प्रस्फोटयेत्, नाऽऽतापयेत्, न प्रतापयेत्,' तत्रेपत्सकृद्वा स्पर्शनमामर्षणम्, अतोऽन्यत्संस्पर्शनम्, एवमीषत्सकृद्वा (पीडनमा)ऽऽपीडनम्, विपरीतं प्रपीडनम्, एवमीषत्सकृद्वा (स्फोटनमा)ऽऽस्फोटनम्, अतोऽन्यत्प्रस्फोटनम्, एवमीषत्सकृद्वा (तापनमा)ऽऽतापनम्, विपरीतं प्रतापनम्, एतत्स्वयं न कुर्यात्, तथाऽन्यमन्येन वा नाऽऽमर्षयेत्, न संस्पर्शयेत्, नाऽऽपीडयेत्, न प्रपीडयेत्, नाऽऽस्फोटयेत्, न प्रस्फोटयेत्, नाऽऽतापयेत्, न प्रतापयेत्, तथाऽऽन्यं स्वत एवाऽऽमृषन्तं वा, संस्पृशन्तं वा, आपीडयन्तं वा, प्रपीडयन्त वा, आस्फोटयन्तं वा, प्रस्फोटयन्तं वा, आतापयन्तं वा, प्रतापयन्तं वा, न समनुजानीयात्, इत्यादि पूर्ववत् ॥ २ ॥

**से भिक्खू वा, भिक्खुणी वा, संजय–विरय–पडिहय–पच्चक्खाय–पावकम्मे, दिआ वा, राओ वा, एगओ वा, परिसागओ वा, सुत्ते वा, जागरमाणे वा, से अगणिं वा, इंगालं वा, मुम्मुरं वा, अच्चिं वा, जालं वा, अलायं वा, सुद्धागणिं वा, उक्कं वा, न उंजिज्जा, न घट्टिज्जा, न उज्जालिज्जा, न निव्वाविज्जा, अण्णं न उंजाविज्जा, न घट्टाविज्जा, न उज्जालाविज्जा, न निव्वाविज्जा, अण्णं उंजंतं वा घट्टंतं वा उज्जालंतं वा निव्वावंतं वा न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि। तस्स भंते! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि॥ ३ ॥**

१ 'न उंजिज्जा, न घट्टिज्जा, न भिंदिज्जा, न उज्जालिज्जा, न पज्जालिज्जा, न निव्वाविज्जा' इति पाठान्तरम्।

छा० स भिक्षुर्वा, भिक्षुकी वा, संयत–विरत–प्रतिहत–प्रत्याख्यात–पापकर्मा, दिवा वा, रात्रौ वा, एकको वा, परिषद्गतो वा, सुप्तो वा, जाग्रद्वा, सोऽग्निं वा, अङ्गारं वा, मुर्मुरं वा, अर्चिर्वा, ज्वालां वा, अलातं वा, शुद्धाग्निं वा, उल्कां वा, नोत्सिञ्चेत्, न घट्टयेत्, नोज्ज्वालयेत्, न निर्वापयेत्, अन्येन नोत्सेचयेत्, न घट्टयेत्, नोज्ज्वालयेत्, न निर्वापयेत्, अन्यमुत्सिञ्चन्तं वा, घट्टयन्तं वा, उज्ज्वालयन्तं वा, निर्वापयन्तं वा, न समनुजानीयात्, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि । तस्य भदन्त ! प्रतिक्रमामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि ॥ ३ ॥

'से भिक्खू॰'–इत्यादि यावत् 'जागरमाणे वत्ति' पूर्ववदेव । 'से अगणिं वा॰'– तद्यथा–'अग्निं वा, अङ्गारं वा, मुर्मुरं वा, अर्चिर्वा, ज्वालां वा, अलातं वा, शुद्धाग्निं वा, उल्कां वा', इहायःपिण्डानुगतोऽग्निः, ज्वाला-रहितोऽङ्गारः, विरलाग्निकणं भस्म–मुर्मुरः, मूलाग्निविच्छिन्ना ज्वाला–अर्चिः, प्रतिबद्धा–ज्वाला, अलातम्–उल्मुकम्, निरिन्धनः–शुद्धोऽग्निः, उल्का–गगनाऽग्निः, एतत्किमित्याह–'न उंजेज्जा॰'–'नोत्सिञ्चेत्, न घट्टयेत्, नोज्ज्वालयेत् न निर्वापयेत्' तत्रोत्जनमुत्सेचनम्, घट्टनं–सजातीयादिना चालनम्, उज्ज्वालनं–व्यञ्जनादिभिर्वृद्ध्यापादनम्, निर्वापणं–विध्यापनम्, एतत्स्वयं न कुर्यात्, तथाऽन्यमन्येन वा नोत्सेचयेत्, न घट्टयेत्, नोज्ज्वालयेत्, न निर्वापयेत्, तथाऽन्यं स्वत एवोत्सेचयन्तं वा, घट्टयन्तं वा, उज्ज्वालयन्तं वा, निर्वापयन्तं वा, न समनुजानीयात्, इत्यादि पूर्ववत् ॥ ३ ॥

से भिक्खू वा, भिक्खुणी वा, संजय–विरय–पडिहय–पच्चक्खाय–पावकम्मे, दिआ वा, राओ वा, एगओ वा, परिसागओ वा, सुत्ते वा, जागरमाणे वा, से सिएण वा, विहुअणेण वा, तालिअंटेण वा, पत्तेण वा, पत्तभंगेण वा, साहाए वा, साहाभंगेण वा, पिहुणेण वा, पिहुणहत्थेण वा, चेलेण वा, चेलकण्णेण वा, हत्थेण वा, मुहेण वा, अप्पणो वा कायं, बाहिरं वा वि पुग्गलं, न फुमिज्जा, न वीइज्जा, अण्णं न फुमाविज्जा, न वीआविज्जा, अण्णं फुमंतं वा वीअंतं वा न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि ! तस्स भंते ! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि ॥ ४ ॥

छा० स भिक्षुर्वा, भिक्षुकी वा, संयत–विरत–प्रतिहत–प्रत्याख्यात–पापकर्मा, दिवा वा, रात्रौ वा, एकको वा, परिषद्गतो वा, सुप्तो वा, जाग्रद्वा, स सिचयेन ( सितेन ) वा, विधवनेन वा, तालवृन्तेन वा, पत्रेण वा, पत्रभङ्गेन वा, शाखया वा, शाखाभङ्गेन वा, पेहुणेन वा, पेहुणहस्तेन वा, चेलेन वा, चेलकर्णेन वा, हस्तेन वा, मुखेन वा, आत्मनो वा कायं, बाह्यं वाऽपि पुद्गलं न फूत्कुर्यात्, न व्यजेत, अन्येन न फूत्कारयेत्, न वीजयेत् (व्याजयेत्), अन्यं फूत्कुर्वन्तं वा, व्यजन्तं वा, न समनुजानीयात्, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि । तस्य भदन्त ! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि ॥ ४ ॥

'से भिक्खू०'–इत्यादि यावत् 'जागरमाणे वत्ति ' पूर्ववदेव । 'से सिएण वा० '–तद्यथा–' सितेन वा, विधवनेन वा, तालवृन्तेन वा, पत्रेण वा, पत्रभङ्गेन वा, शाखया वा, शाखाभङ्गेन वा, पेहुणेन वा, पेहुणहस्तेन वा, चेलेन वा, चेलकर्णेन वा, हस्तेन वा, मुखेन वा,' इह सितं–चामरम्, विधवनं–व्यजनं, तालवृन्तं तदेव, मध्यग्रहणच्छिद्रं द्विपुटम्, पत्रं–पद्मिनीपत्रादि, शाखा–वृक्षडालम्, शाखाभङ्गस्तदेकदेशः, पेहुणं–मयूरपिच्छादि, पेहुणहस्तकस्तत्समूहः, चेल–वस्त्रम्, चेलकर्णस्तदेकदेशः, हस्तमुखे प्रतीते (हस्तमुखं प्रतीतम्), एभिः किमित्याह–' आत्मनो वा कायं ' स्व–देहमित्यर्थः, 'बाह्यं वा पुद्गलम्' उष्णोदनादि, एतत्किमित्याह–'न फुमेज्जा०'–'न फूत्कुर्यात्, न व्यञ्जयेत् (व्यजेत्)' तत्र फूत्करणं–मुखेन धमनम्, व्यञ्जनं (वीजनं)–चामरादिना वायुकरणम्, एतत्स्वयं न कुर्यात्, तथाऽन्यमन्येन वा न फूत्कारयेत्, न वीजयेत्, अन्य स्वत एव फूत्कुर्वन्तं वा, वीजयन्तं वा, न समनुजानीयात्, इत्यादि पूर्ववदेव ॥४॥

से भिक्खू वा, भिक्खुणी वा, संजय–विरय–पडिहय–पच्चक्खाय–पावकम्मे, दिआ वा, राओ वा, एगओ वा, परिसागओ वा, सुत्ते वा, जागरमाणे वा, से बीएसु वा, बीअपइट्ठेसु वा, रूढेसु वा, रूढपइट्ठेसु वा, जाएसु वा, जायपइट्ठेसु वा, हरिएसु वा, हरिअपइट्ठेसु वा, छिण्णेसु वा, छिण्णपइट्ठेसु वा, सचित्तेसु वा, सचित्तकोलपडिनिस्सिएसु वा, न गच्छिज्जा, न चिट्ठिज्जा, न निसीइज्जा, न तुअट्टिज्जा, अण्णं न गच्छाविज्जा, न चिट्ठाविज्जा, न निसीआविज्जा, न तुअट्टाविज्जा, अण्णं गच्छंतं वा चिट्ठंतं वा निसीअंतं वा तुअट्टंतं वा न समणुजाणिज्जा, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए

काएणं न करेमि न कारवेमि करंतं पि अण्णं न समणुजाणामि । तस्स भंते ! पडिक्कमामि, निंदामि, गरिहामि, अप्पाणं वोसिरामि ॥ ५ ॥

छा० स भिक्षुर्वा, भिक्षुकी वा, संयत--विरत--प्रतिहत--प्रत्याख्यात--पापकर्मा, दिवा वा, रात्रौ वा, एकको वा, परिषद्गतो वा, सुप्तो वा, जाग्रद्वा, स बीजेषु वा, बीजप्रतिष्ठेषु वा, रूढेषु वा, रूढप्रतिष्ठेषु वा, जातेषु वा, जातप्रतिष्ठेषु वा, हरितेषु वा, हरितप्रतिष्ठेषु वा, छिन्नेषु वा, छिन्नप्रतिष्ठेषु वा, सचित्तेषु वा, सचित्तकोलप्रतिनिश्रितेषु वा, न गच्छेत्, न तिष्ठेत्, न निषीदेत्, न त्वग्वर्तेत (स्वप्यात्), अन्यं न गमयेत्, न स्थापयेत्, न निषादयेत्, न त्वग्वर्तयेत् (स्वापयेत्), अन्यं गच्छन्तं वा, तिष्ठन्तं वा, निषीदन्तं वा, त्वग्वर्तमानं (स्वपन्तं) वा, न समनुजानीयात्, यावज्जीवं त्रिविधं त्रिविधेन मनसा वचसा कायेन न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामि। तस्य भदन्त ! प्रतिक्रामामि, निन्दामि, गर्हे, आत्मानं व्युत्सृजामि ॥ ५ ॥

'से भिक्खू वा०'—इत्यादि यावत् 'जागरमाणे वत्ति' पूर्ववदेव । 'से बीएसु वा०'—तद्यथा-'बीजेषु वा, बीजप्रतिष्ठितेषु वा, रूढेषु वा, रूढप्रतिष्ठितेषु वा, जातेषु वा, जातप्रतिष्ठितेषु वा, हरितेषु वा, हरितप्रतिष्ठितेषु वा, छिन्नेषु वा, छिन्नप्रतिष्ठितेषु वा, सचित्तेषु वा, सचित्तकोलप्रतिष्ठितेषु वा'[1], इह बीज--शाल्यादि, तत्प्रतिष्ठितम्--आसनशयनादि गृह्यते, एव सर्वत्र वेदितव्यम्, रूढानि--स्फुटितबीजानि, जातानि--स्तम्बीभूतानि, हरितानि--

1 'सचित्तकोलप्रतिनि श्रितेषु वा'--इति च पाठ. ।

दूर्वादीनि, छिन्नानि—परश्वादिभिर्वृक्षात्पृथक्स्थापितानि, आर्द्राणि--अपरिणतानि तदङ्गानि गृह्यन्ते । सचित्तान्यण्डकादीनि, कोलो—घुणः, तत्प्रतिनिश्रितानि--तदुपरिवर्तीनि दार्वादीनि गृह्यन्ते, एतेषु किमित्याह--'न गच्छिज्जात्ति--' 'न गच्छेत्, न तिष्ठेत्, न निषीदेत्, न त्वग्वर्तेत'—तत्र गमनमन्यतोऽन्यत्र स्थानमेकत्रैव, निषी(ष)दनमुपवेशनम्, त्वग्वर्तनं--स्वपनम्, एतत्स्वयं न कुर्यात्, तथाऽन्यमेतेषु न गमयेत्, न स्थापयेत्, न निषादयेत्, न स्वापयेत्, तथाऽन्यं स्वत एव गच्छन्तं वा, तिष्ठन्तं वा, निषीदन्तं वा, स्वपन्तं वा, न समनुजानीयात्, यावज्जीवमित्यादि पूर्ववदेव ॥ ९ ॥

से भिक्खू वा, भिक्खुणी वा, संजय-विरय-पडिहय-पच्चक्खाय-पावकम्मे, दिआ वा, राओ वा, एगओ वा, परिसागओ वा, सुत्ते वा, जागरमाणे वा, से कीडं वा, पयंगं वा, कुंथुं वा, पिवी(पी)लिअं वा, हत्थंसि वा, पायंसि वा, बाहुंसि वा, उरुंसि वा, उदरंसि वा, सीसंसि वा, वत्थंसि वा, पडिग्गहंसि वा, कंबलंसि वा, पायपुंछणंसि वा, रयहरणंसि वा, गुच्छगंसि वा, उंडगंसि वा, दंडगंसि वा, पीढगंसि वा, फलगंसि वा, सिज्जंसि वा, संथारगंसि वा, अण्णयरंसि वा तहप्पगारे (रंसि) उवगरणजाए (यंसि), तओ संजयामेव पडिलेहिअ पडिलेहिअ पमज्जिअ पमज्जिअ एगंतमवणिज्जा, नो णं संघायमावज्जिज्जा ॥ ६ ॥

छा० स भिक्षुर्वा, भिक्षुकी वा, संयत—विरत—प्रतिहत—प्रत्याख्यात—पापकर्मा, दिवा वा, रात्रौ वा, एकको वा, परिषद्गतो वा, सुप्तो वा, जाग्रद्वा, स कीटं वा, पतङ्गं वा, कुन्थुं वा, पिपीलिकां वा,

हस्ते वा, पादे वा, बाहौ वा, ऊरौ वा, उदरे वा, शीर्षे वा, वस्त्रे वा, पतद्ग्रहे वा, कम्बले वा, पादप्रोञ्छने वा, रजोहरणे वा, गुच्छके वा, उन्दुके वा, दण्डके वा, पीठके वा, फलके वा, शय्यायां वा, संस्तारके वा, अन्यतरस्मिन्वा तथाप्रकारे उपकरणजाते, ततः संयतमेव प्रतिलिख्य प्रतिलिख्य प्रमृज्य प्रमृज्य एकान्तमपनयेत्, नैनं सङ्घातमापादयेत् ॥ ६ ॥

'से भिक्खू वा०'–इत्यादि यावत् 'जागरमाणे वत्ति' पूर्ववदेव । 'से कीडं वा०'–'स कीटं वा, पतङ्गं वा, कुन्थुं वा, पिपीलिकां वा,' किमित्याह–'हस्ते वा, पादे वा, बाहौ वा, ऊरुणि (ऊरौ) वा, उदरे वा, वस्त्रे वा, रजोहरणे वा, गुच्छे वा, उन्दुके वा, दण्डके वा, पीठे वा, फलके वा, शय्यायां वा, संस्तारके वा, अन्यतरस्मिन्वा तथाप्रकारे साधुक्रियोपयोगिनि उपकरणजाते' कीटादिरूपं त्रसं कथञ्चिदापतितं सन्तं संयत एव सत्प्रयत्नेन प्रत्युपेक्ष्य प्रत्युपेक्ष्य पौनःपुन्येन, सम्यक्, प्रमृज्य प्रमृज्य पौनःपुन्येनैव, सम्यक्, किमित्याह–एकान्ते तस्याऽनुपघातके स्थाने, अपनयेत्–परित्यजेत्, नैनं सङ्घातमापादयेत्, नैनं त्रसं सङ्घातं–परस्परगात्रसंस्पर्शपीडारूपम्, आपादयेत्–प्रापयेत् । अनेन परितापनादिप्रतिषेध उक्तो वेदितव्यः [एकग्रहणे तज्जातीयग्रहणात्], अन्याऽनुकारणाऽनुमतिप्रतिषेधश्च, शेषमत्र प्रकटार्थमेव, नवरम्–'उंडुगं'–स्थण्डिलम्, शय्या–संस्तारकौ वसतिर्वा ॥ ६ ॥

इत्युक्ता यतना, गतश्चतुर्थोऽधिकारः । साम्प्रतमुपदेशाख्यः पञ्चम उच्यते—

अजयं चरमाणो उ पाणिभूयाइं हिंसइ ।
बंधइ पावयं कम्मं तं से होइ कडुअं फलं ॥ १ ॥

छा० अयतं चरंस्तु, प्राणिभूतानि हिनस्ति ।
बध्नाति पापकं कर्म, तत्तस्य भवति कटुक-फलम् ॥ १ ॥

'अयतं चरन्०'-अयतमनुपदेशेन-असूत्राऽऽज्ञयेति 'क्रियाविशेषणमेतत्,' चरन्-गच्छन्, तुरेवकाराऽर्थः, अयतमेव चरन्-गच्छन्-ईर्यासमितिमुल्लङ्घ्य, न त्वन्यथा, किमित्याह-'प्राणिभूतानि हिनस्ति' प्राणिनो-द्वीन्द्रियादयः, भूतानि-एकेन्द्रियाः, तानि हिनस्ति प्रमादाऽनाभोगाभ्यां व्यापादयतीति भावः, तानि च हिंसन् बध्नाति पापं कर्म-अकुशलपरिणामादादत्ते क्लिष्टं ज्ञानाऽऽवरणीयादि, 'तत् से भवति कटुकं फलम्'-तत् पापं कर्म से-तस्य अयतचारिणो भवति कटुकफलम् [ इत्यनुस्वारोऽलाक्षणिकः ]-अशुभफलं भवति मोहादिहेतुतया विपाकदारुणमित्यर्थः ॥ १ ॥

अजयं चिट्ठमाणो उ पाणिभूयाइं हिंसइ ।
बंधइ पावयं कम्मं तं से होइ कडुअं फलं ॥ २ ॥

छा० अयतं तिष्ठंस्तु, प्राणिभूतानि हिनस्ति ।
बध्नाति पापकं कर्म, तत्तस्य भवति कटुक-फलम् ॥ २ ॥

'अजयं चिट्ठमाणो०'-एवमयतं तिष्ठन्-ऊर्द्ध्वस्थानेन असमाहितो हस्तपादादि विक्षिपन्, शेषं सर्वत्र पूर्ववत् ॥ २ ॥

अजयं आसमाणो उ पाणिभूयाइं हिंसइ ।
बंधइ पावयं कम्मं तं से होइ कडुअं फलं ॥ ३ ॥
छा० अयतमासीनस्तु, प्राणिभूतानि हिनस्ति ।
बध्नाति पापकं कर्म, तत्तस्य भवति कटुक–फलम् ॥ ३ ॥

'अजयं आसमाणो०'–एवमयतमासीनो निषण्णतया अनुपयुक्त आकुञ्चनादिभावेन ॥ ३ ॥

अजयं सयमाणो उ पाणिभूयाइं हिंसइ ।
बंधइ पावयं कम्मं तं से होइ कडुअं फलं ॥ ४ ॥
छा० अयतं शयानस्तु, प्राणिभूतानि हिनस्ति ।
बध्नाति पापकं कर्म, तत्तस्य भवति कटुक–फलम् ॥ ४ ॥

'अजयं सयमाणो०'–एवमयतं स्वपन्–असमाहितो, दिवा प्रकामशय्यादिना वा ॥ ४ ॥

अजयं भुंजमाणो उ पाणिभूयाइं हिंसइ ।
बंधइ पावयं कम्मं तं से होइ कडुअं फलं ॥ ५ ॥
छा० अयतं भुञ्जानस्तु, प्राणिभूतानि हिनस्ति ।
बध्नाति पापकं कर्म, तत्तस्य भवति कटुक–फलम् ॥ ५ ॥

'अजयं भुंजमाणो०'–अयतं भुञ्जानो निष्प्रयोजनं प्रणीतं काकशृगालभक्षितादिना वा ॥ ५ ॥

अजयं भासमाणो उ पाणिभूयाइं हिंसइ ।
बंधइ पावयं कम्मं तं से होइ कडुअं फलं ॥ ६ ॥

छा० अयतं भाषमाणस्तु, प्राणिभूतानि हिनस्ति ।
बध्नाति पापकं कर्म, तत्तस्य भवति कटुक–फलम् ॥ ६ ॥

'अजयं भासमाणो०'–अयतं भाषमाणो गृहस्थभाषया निष्ठुरमन्तरभाषादिना वा ॥ ६ ॥

कहं चरे कहं चिट्ठे कहमासे कहं सए ।
कहं भुंजंतो भासंतो पावं कम्मं न बंधइ ? ॥ ७ ॥

छा० कथं चरेत्कथं तिष्ठेत्, कथमासीत कथं स्वपेत् ।
कथं भुञ्जानो भाषमाणः, पापं कर्म न बध्नाति ? ॥ ७ ॥

जयं चरे जयं चिट्ठे जयमासे जयं सए ।
जयं भुंजंतो भासंतो पावं कम्मं न बंधइ ॥ ८ ॥

छा० यतं चरेद्यतं तिष्ठेत्, यतमासीत यतं स्वपेत् ।
यतं भुञ्जानो भाषमाणः, पापं कर्म न बध्नाति ॥ ८ ॥

'कहं चरे०'—अत्राह—यद्येवं पापकर्मबन्धः, ततः कथं चरेत्? ॥ ७ ॥ आचार्य आह—'जयं चरे०'—सुगमा ॥ ८ ॥

**सव्वभूअप्पभूअस्स, संमं भूआइं पासओ।**
**पिहिआसवस्स दंतस्स पावं कम्मं न बंधइ ॥ ९ ॥**

छा० **सर्वभूतात्मभूतस्य, सम्यग्भूतानि पश्यतः।**
**पिहितास्रवस्य दान्तस्य, पापं कर्म न बध्नाति ॥ ९ ॥**

'सव्वभूअ०'—अस्या व्याख्या आदर्श पुस्तके नास्ति, परत्र लेशतो गाथान्तरे वर्तते, सेत्थम्—'सर्वाणि भूतानि—आत्मभूतानि—आत्मप्रायाणि यस्य स तथा तस्य [द्वितीयाऽर्थे षष्ठी], सम्यग्भूतानि—पृथिव्यादीनि पश्यतः, पिहिताऽऽस्रवं—स्थगितप्राणातिपातादिकं(कस्य), दान्तस्य—इन्द्रियनोइन्द्रियदमेन कर्मताऽऽपन्नं(तस्य) पापं कर्म न बध्नाति ॥ ९ ॥ प्रत्यन्तरात्। एवं सति सर्वभूतदयावतः पापकर्मबन्धो न भवति, इति, ततश्च सर्वाऽऽत्मना दयायामेव यतितव्यम्, अलं ज्ञानाऽभ्यासेनाऽपि? (नेति), मा भूदव्युत्पन्न—विनेय—मति—विभ्रम इति तदपोहाय आह—

**पढमं नाणं तओ दया एवं चिट्ठइ सव्वसंजए।**
**अन्नाणी किं काही किं वा नाहिइ छेअ पावगं? ॥ १० ॥**

छा० **प्रथमं ज्ञानं ततो दया, एवं तिष्ठति सर्वसंयतः।**
**अज्ञानी किं करिष्यति, किं वा ज्ञास्यति छेकपापकम्? ॥ १० ॥**

'पढमं नाणं०'—प्रथममादौ ज्ञानं ततो दया, 'सूत्रोपदेशेन ईर्यासमितः, समाहितो हस्तपादाद्यविक्षेपेण, उपयुक्त आकुञ्चनाद्यकरणेन, रात्रौ प्रकामशय्यापरिहारेण, सप्रयोजनमप्रणीतं प्रतरसिंहभक्षितादिना, साधुभाषया मृदु-कालप्राप्तं, निरास्रवत्वात्—विहितानुष्ठानपरत्वात्, य आत्मवत्सर्वभूतानि पश्यतीति भावः'।

'वीतरागोक्तेन विधिना पृथिव्यादीनि पश्यतः, स्थगितपञ्चास्रवस्य इन्द्रियनोइन्द्रियदमनेन न बध्यते', एवमनेन प्रकारेण ज्ञानपूर्वकक्रियाप्रतिपत्तिरूपेण तिष्ठति सर्वसंयतः । यः पुनरज्ञानी—साध्योपाय-फल-परिज्ञान-विकलः, स किं करिष्यति ? सर्वत्राऽन्धतुल्यत्वात्, प्रवृत्ति—निवृत्ति—निमित्ताऽभावात्, किं वा कुर्वन् ज्ञास्यति छेकं निपुणं हितं कालोचितं, 'पापक वा' अतो विपरीतम्, ततश्च तत्करणं भावतोऽकरणमेव, समग्रनिमित्ताभावात्, अन्ध—प्रदीप्त—पलायन—घुणाऽक्षर—करणवत्, अत एव—अन्यत्राऽप्युक्तम्—

" गीअत्थो अविहारो, बीओ गीअत्थमीसिओ भणिओ " ।

इत्यादि । अतो ज्ञानाऽभ्यासः कार्यः ॥ १० ॥ तथा चाह—

सुच्चा जाणइ कल्लाणं सुच्चा जाणइ पावगं।
उभयं पि जाणइ सुच्चा जं छेअं तं समायरे॥ ११ ॥

छा० श्रुत्वा जानाति कल्याणं, श्रुत्वा जानाति पापकम् ।
उभयमपि जानाति श्रुत्वा, यच्छेकं तत्समाचरेत् ॥ ११ ॥

'सुच्चा जाणइ०'–श्रुत्वा ससाधनस्वरूपविपाकं जानाति–'कल्याणं–कल्यो मोक्षः, तमणति–नयति इति कल्याणं दयाऽऽख्यं संयमस्वरूपम्,' तथा श्रुत्वा जानाति पापकम्–असंयमस्वरूपम्, उभयमपि संयमाऽसंयमस्वरूपम्–श्रावकोपयोगि जानाति श्रुत्वा, यतश्चैवमत इत्थं विज्ञाय यच्छेकं–निपुणम्, हितं–कालोचितं, तत्समाचरेत् ॥ ११ ॥

उक्तमेवार्थं स्पष्टयन्नाह—

जो जीवे वि न याणाइ अजीवे वि न याणइ ।
जीवाजीवे अयाणंतो कह सो नाहीइ संजमं ? ॥ १२ ॥

छा० यो जीवानपि न जानाति, अजीवानपि न जानाति ।
जीवानजीवानजानन्, कथं स ज्ञास्यति संयमम् ? ॥ १२ ॥

'जो जीवे०'–यो जीवानपि पृथ्वीकायिकादिभेदभिन्नान् न जानाति, अजीवानपि–संयमोपघातिनो मद्यहिरण्यादीन् न जानाति। एवं जीवाऽजीवानजानन् कथमसौ ज्ञास्यति संयमम् ? तद्विषयाऽज्ञानादिति भावः ॥ १२ ॥

जो जीवे वि विआणाइ अजीवे वि विआणइ ।
जीवाजीवे विआणंतो सो उ ( हु ) नाहीइ संजमं ॥ १३ ॥

छा० यो जीवानपि विजानाति, अजीवानपि विजानाति ।
जीवानजीवान्विजानन्, स तु ( हि ) ज्ञास्यति संयमम् ॥ १३ ॥

'जो जीवे०'—यो जीवानभिजानाति, अजीवानपि जानाति, जीवाऽजीवान् विजानन् स एव ज्ञास्यति संयमम् ॥ १३ ॥

प्रतिपादितः पञ्चम उपदेशाऽर्थाऽधिकारः। साम्प्रतं षष्ठेऽधिकारे धर्मफलमाह—

जया जीवमजीवे य दोवि एए विआणइ।
तया गइं बहुविहं सव्वजीवाण जाणइ ॥ १४ ॥

छा० यदा जीवमजीवञ्च, द्वावप्येतौ विजानाति।
तदा गतिं बहुविधां, सर्वजीवानां जानाति ॥ १४ ॥

'जया जीव०'—यदा जीवानजीवांश्च द्वावप्येतौ विजानाति, तदा गतिं—नरकगत्यादिरूपां बहुविधां सर्वजीवानां जानाति, यथाऽवस्थित—जीवाऽजीव—परिज्ञानमन्तरेण गतिपरिज्ञानाऽभावात् ॥ १४ ॥ उत्तरोत्तरां फलवृद्धिमाह—

जया गइं बहुविहं सव्वजीवाण जाणइ।
तया पुण्णं च पावं च बंधं मुक्खं च जाणइ ॥ १५ ॥

छा० यदा गतिं बहुविधां, सर्वजीवानां जानाति।
तदा पुण्यं च पापं च, बन्धं मोक्षं च जानाति ॥ १५ ॥

'जया गइं०'—यदा गतिं सर्वजीवानां जानाति तदा पुण्यं च पापं च बहुविधगतिनिबन्धनम्, तथा बन्धं जीवकर्मयोगात्सुखदुःखलक्षणम्, मोक्षं च तद्वियोगसुखलक्षणं जानाति ॥ १५ ॥

जया पुण्णं च पावं च बंधं मुक्खं च जाणइ ।
तया निव्विंदए भोए जे दिव्वे जे अ माणुसे ॥ १६ ॥

छा० यदा पुण्यं च पापं च, बन्धं मोक्ष च जानाति ।
तदा निर्विन्ते भोगान्, यान्दिव्यान्यांश्च मानुषान् ॥ १६ ॥

'जया पुण्णं०'—तदा निर्विन्ते—मोहाऽभावात् सम्यग् विचारयति, असारान् दुःखस्वरूपतया भोगान् शब्दादीन् यान् दिव्यान् यांश्च मानुषान्, शेषास्तु वस्तुतो भोगा एव न भवन्ति ॥ १६ ॥

जया निव्विंदए भोए जे दिव्वे जे अ माणुसे ।
तया चयइ संजोगं सब्भिंतरबाहिर ॥ १७ ॥

छा० यदा निर्विन्ते भोगान्, यान्दिव्यान्यांश्च मानुषान् ।
तदा त्यजति संयोगं, साभ्यन्तर-बाह्यम् ॥ १७ ॥

'जया निव्विंदए०'—तदा त्यजति संयोगं साऽभ्यन्तरबाह्यं—क्रोधादिहिरण्यादिसम्बन्धमित्यर्थः ॥ १७ ॥

जया चयइ संजोगं सब्भिंतरबाहिरं ।
तया मुंडे भवित्ताणं पव्वइए अणगारिअं ॥ १८ ॥

छा० यदा त्यजति संयोगं, साभ्यन्तर–बाह्यम् ।
तदा मुण्डो भूत्वा, प्रव्रजत्यनगारताम् ॥ १८ ॥

'जया चयइ०'—तदा मुण्डो भूत्वा द्रव्यतो भावतश्च, प्रव्रजति प्रकर्षेण व्रजति–अपवर्गं प्रति, अनगारं द्रव्यतो भावतश्च, अविद्यमानाऽगारमिति भावः ॥ १८ ॥

जया मुंडे भवित्ताणं पव्वइए अणगारिअं ।
तया संवरमुक्किट्ठं धम्मं फासे अणुत्तरं ॥ १९ ॥

छा० यदा मुण्डो भूत्वा, प्रव्रजत्यनगारताम् ।
तदा संवरमुत्कृष्टं, धर्मं स्पृशत्यनुत्तरम् ॥ १९ ॥

'जया मुंडे०'—'तया संवरमुक्किट्ठं ति'—[ प्राकृतशैल्या ] उत्कृष्टं संवरम्, धर्मं–चारित्रधर्ममित्यर्थः, स्पृशत्यनुत्तरं सम्यगासेवत इत्यर्थः ॥ १९ ॥



जया संवरमुक्किट्ठं धम्मं फासे अणुत्तरं ।
तया धुणइ कम्मरयं अबोहिकलुसं कडं ॥ २० ॥

छा० यदा संवरमुत्कृष्टं, धर्मं स्पृशत्यनुत्तरम् ।
तदा धुनोति कर्मरजः, अबोधिकलुषं कृतम् ॥ २० ॥

'जया संवर०'–'तया धुणइत्ति'–तदा धुनाति–अनेकार्थत्वात् पातयति कर्मरजः, किंविशिष्टमित्याह–अबोधिकलुषं कृतम्–अबोधि-कलुषेण मिथ्यादृष्टिनोपात्तमित्यर्थः ॥ २० ॥

जया धुणइ कम्मरयं अबोहिकलुसं कडं ।
तया सव्वत्तगं नाणं दंसणं चाभिगच्छइ ॥ २१ ॥
छा० यदा धुनोति कर्मरजः, अबोधिकलुषं कृतम् ।
तदा सर्वत्रगं ज्ञानं, दर्शनं चाभिगच्छति ॥ २१ ॥

'जया धुणइ०'–'तया सव्वत्तगं ति'–तदा सर्वत्रगं ज्ञानम्–अशेषज्ञेयविषयम्, दर्शनम्–अनन्ताशेष-दृश्यविषयमधिगच्छति–आवरणाऽभावादाधिक्येन प्राप्नोतीत्यर्थः ॥ २१ ॥

जया सव्वत्तगं नाणं दंसणं चाभिगच्छइ ।
तया लोगमलोगं च जिणो जाणइ केवली ॥ २२ ॥
छा० यदा सर्वत्रगं ज्ञानं, दर्शनं चाभिगच्छति ।
तदा लोकमलोकं च, जिनो जानाति केवली ॥ २२ ॥

'जया सव्वत्तगं०'–तदा लोकं–चतुर्दशरज्ज्वाऽऽत्मकम्, अलोकं वा अनन्तं, जिनो जानाति केवली, लोकाऽलोकौ च सर्वं नाऽन्यतरमेवेत्यर्थः ॥ २२ ॥

जया लोगमलोगं च जिणो जाणइ केवली ।
तया जोगे निरुंभित्ता सेलेसिं पडिवज्जइ ॥ २३ ॥

छा० यदा लोकमलोकं च, जिनो जानाति केवली ।
तदा योगान्निरुध्य, शैलेशीं प्रतिपद्यते ॥ २३ ॥

'जया लोग०'–'तया जोगेत्ति' तदोचितसमयेन योगान्निरुध्य मनोयोगादीन्, शैलेशीं प्रतिपद्यते–भवोपग्राहिकर्मांऽशक्षयाय ॥ २३ ॥

जया जोगे निरुंभित्ता सेलेसिं पडिवज्जइ ।
तया कम्मं खवित्ताणं सिद्धिं गच्छइ नीरओ ॥ २४ ॥

छा० यदा योगान्निरुध्य शैलेशीं प्रतिपद्यते ।
तदा कर्म क्षपयित्वा सिद्धिं गच्छति नीरजाः ॥ २४ ॥

'जया जोगे०'–'तया कम्मं ति'–तदा कर्म क्षपयित्वा सिद्धिं गच्छति नीरजाः–सकलकर्मरजोविप्रमुक्तः ॥ २४ ॥

जया कम्मं खवित्ताणं सिद्धिं गच्छइ नीरओ ।
तया लोगमत्थयत्थो सिद्धो हवइ सासओ ॥ २५ ॥

छा० यदा कर्म क्षपयित्वा, सिद्धिं गच्छति नीरजाः ।
तदा लोकमस्तकस्थः, सिद्धो भवति शाश्वतः ॥ २५ ॥

'जया कम्मं०'—तदा लोकमस्तकस्थस्त्रैलोक्योपरिवर्ती सिद्धो भवति शाश्वतः, कर्मबीजाऽभावादनुत्पत्तिधर्मेति भावः ॥ २५ ॥

उक्तो धर्मफलाऽऽख्यः षष्ठोऽधिकारः । इदानीमिदं धर्मफलं यस्य दुर्लभं तदा(मा)ह—

सुहसायगस्स समणस्स सायाउलगस्स निगामसाइस्स ।
उच्छोलणापहोअस्स दुलहा सुगई तारिसगस्स ॥ २६ ॥

छा० सुखस्वादकस्य श्रमणस्य, साताकुलस्य निकामशायिनः ।
उत्सोलनाप्रधाविनो, दुर्लभा सुगतिस्तादृशस्य ॥ २६ ॥



'सुहसायगस्स०'—सुखाऽऽस्वादकस्य—अभिष्वङ्गेण प्राप्तसुखभोक्तुः, श्रमणस्य—द्रव्यप्रव्राजितस्य, साताऽऽकुलस्य—भाविसुखार्थं विक्षिप्तचित्तस्य, निकामशायिनः—सूत्राऽर्थवेलामप्युल्लङ्घ्य शयानस्य, उत्सोलनाप्रधाविनः—उत्सोल-

नया—उदकाऽयतनया प्रकर्षेण धावति—पादादि शुद्धिं करोति यः स तथा, तस्य, किमित्याह—दुर्लभा सुगतिस्तादृशस्य भगवदाज्ञालोपकारिणः ॥ २६ ॥ अथेदं यस्य सुलभं तदा(मा)ह—

तवोगुणप्पहाणस्स उज्जुमइ खंतिसंजमरयस्स ।
परीसहे जिणंतस्स सुलहा सुगई तारिसगस्स ॥ २७ ॥

छा० तवोगुणप्रधानस्य, ऋजुमतेः क्षान्तिसंयमरतस्य ।
परीषहाञ्जयतः, सुलभा सुगतिस्तादृशस्य ॥ २७ ॥

'तवोगुण०'—तपोगुणप्रधानस्य षष्ठाऽष्टमादितपोवतः (तपस्विनः), ऋजुमतेमार्गप्रवृत्तबुद्धेः, 'खंतिसंजमरय'-रतस्ति—शान्तिप्रधानसंयमसेविनः, परीषहान्—क्षुत्पिपासाऽऽदीन्—जयतः, सुलभा सुगतिः—उक्तलक्षणा तादृशस्य, पूर्ववत् ॥ २७ ॥

पच्छा वि ते पयाया खिप्पं गच्छंति अमरभवणाइं ।
जेसिं पिओ तवो संजमो अ खंती अ बंभचेरं च ॥ २८ ॥

छा० पश्चादपि ते प्रयाताः, क्षिप्रं गच्छन्त्यमरभवनानि ।
येषां प्रियं तपः संयमश्च, क्षान्तिश्च ब्रह्मचर्यं च ॥ २८ ॥

'पच्छा वि०'—पश्चादपि वृद्धाऽवस्थायामपि खण्डितचारित्रा अपि पुनस्तत्सन्धानतो ये सन्मार्गं प्रपन्नाः, ते प्रकर्षेण याताः प्रांता अमरभवनानी(नि गच्छन्ती)त्युत्तरेण सम्बन्धः ॥ २८ ॥

इयं महार्थेति विधिनोपसंहरन्नाह—

इच्चेअं छज्जीवणिअं सम्मद्दिट्ठी सया जए ।
दुल्लहं लभित्तु सामण्णं कम्मणा (कम्मुणा) न विराहिज्जासि ॥ २९॥ त्ति बेमि ।

छा० इत्येतां षड्जीवनिकां, सम्यग्दृष्टिः सदा यतः ।
दुर्लभं लब्ध्वा श्रामण्यं, कर्मणा न विराधयेत् ॥ २९ ॥ इति ब्रवीमि ।

'इच्चेअं०'—इत्येतां षड्जीवनिकायिकां न विराधयेदिति योगः, सम्यग्दृष्टिर्जीवः सदा यतः—सर्वकालं प्रयत्नपरः सन्, दुर्लभं लब्ध्वा श्रामण्य—श्रमणभावं षड्जीवनिकायसंरक्षणैकरूप कर्मणा मनोवाक्कायक्रियया प्रमादेन न विराधयेत्, अप्रमत्तस्य तु द्रव्यविराधना कथञ्चिद् भवति, तथाऽप्यसावविराधनैवेत्यर्थः । एतेन—

"जले जीवाः स्थले जीवाः, आकाशे जीवमालिनि ।
जीवमालाऽऽकुले लोके, कथं भिक्षुरहिंसकः" ॥ १ ॥



---

१ इयं बृहद्वृत्तौ न व्याख्याता । २ प्राप्ता आर्द्रकुमार—नन्दिषेणादिवत्, इति प्रत्यन्तरे ।

इत्येतमत्युक्तम् । तथा सूक्ष्माणां विराधनाऽभावाच ॥ २९ ॥ ब्रवीमीति पूर्ववत् । इति षड्जीवनिकाख्यिकाऽवचूरिः ।



॥ छज्जीवणिआनामज्झयणं चउत्थं ॥

॥ इति षड्जीवनिका–नामाध्ययनं चतुर्थम् ॥



## ॥ अथ पञ्चमाध्ययनम् ॥



षड्जीवनिकायिकाऽध्ययनोक्त आचारो—धर्मः काये स्वस्थे सति सम्यक् पाल्यते, सचाऽऽहारेणैव स्वस्थो भवति, स च सावद्येतरभेद इत्यनवद्यो ग्राह्यः, इत्येतदुच्यते, उक्तं च—

" से संजए समक्खाए, निरवज्जाहारि जे विऊ ।
धम्मकायट्ठिए सम्मं, सुहजोगाणं साहए " ॥ १ ॥

इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, तच्चेदम्—

**संपत्ते भिक्खकालंमि असंभंतो अमुच्छिओ ।
इमेण कमजोगेण भत्तपाणं गवेसए ॥ १ ॥**

**छा० सम्प्राप्ते भिक्षाकाले, असम्भ्रान्तोऽमूर्च्छितः ।
अनेन क्रमयोगेन, भक्तपानं गवेषयेत् ॥ १ ॥**

'संपत्ते०'—सम्प्राप्ते शोभनेन प्रकारेण स्वाध्यायकरणादिना प्राप्ते, भिक्षाकाले—भिक्षासमये, अनेन असम्प्राप्ते भक्तपानैषणानिषेधमाह, अलाभाऽऽज्ञाखण्डनाभ्यां दृष्टाऽदृष्टविरोधात्, असम्भ्रान्तोऽनाकुलो यथावदुपयोगादि

कृत्वा, नाऽन्यथेत्यर्थः, अमूर्च्छितः–पिण्डे शब्दादिषु वा, अगृद्धो–विहिताऽनुष्ठानमिति कृत्वा, न तु पिण्डादावेवाऽऽ–सक्त इति। अनेन क्रमयोगेन–परिपाटीव्यापारेण, भक्तपानम्–ओदनाऽऽरनालादि गवेषयेत् ॥ १ ॥

यत्र यथा गवेषयेत्तदाह—

से गामे वा नगरे वा गोअरग्गगओ मुणी ।
चरे मंदमणुव्विग्गो अव्वक्खित्तेण चेअसा ॥ २ ॥

छा० स ग्रामे वा नगरे वा, गोचराग्रगतो मुनिः ।
चरेन्मन्दमनुद्विग्नः, अव्याक्षिप्तेन चेतसा ॥ २ ॥

'से गामे०'–स इत्यसम्भ्रान्तोऽमूर्च्छितः। 'ग्रामे वा नगरे वा'–उपलक्षणत्वादस्य कर्वटादौ वा 'गोचराग्रगत' इति गोरिव चरणं–गोचरः–उत्तमाऽधममध्यमकुलेषु अरक्ताऽद्विष्टस्य भिक्षाटनम्, अग्रः प्रधानोऽभ्याहृताऽऽ–धाकर्मादिपरित्यागेन तद्गतस्तद्वर्ती मुनिः–भावसाधुः, चरेद्–गच्छेत्, शनैः शनैर्न द्रुतमित्यर्थः, अनुद्विग्नः प्रशान्तः परीषहादिभ्योऽबिभ्यत्, अव्याक्षिप्तेन चेतसा–शब्दादिष्वगतेन चेतसा एषणोपयुक्तेन ॥ २ ॥ यथा चरेत्तथैवाह—

पुरओ जुगमायाए पेहमाणो महीं चरे ।
वज्जंतो बीअहरिआइं पाणे अ दगमट्टिअं ॥ ३ ॥

छा० पुरतो युगमात्रया, प्रेक्षमाणो महीं चरेत् ।
वर्जयन्बीजहरितानि, प्राणिनश्चोदकमृत्तिकाम् ॥ ३ ॥

'पुरओ०'—पुरतोऽग्रतो युगमात्रया—शरीरप्रमाणया शकटोर्द्धिसंस्थितया दृष्ट्या, इति वाक्यशेषः, प्रेक्षमाणः प्रकर्षेण पश्यन् महीं चरेद्—यायात्, न प्रेक्षमाण एव अपि तु वर्जयन्—परिहरन्, 'बीजहरितानी'त्यनेनाऽनेकविधवनस्पतेः परिहारमाह, तथा प्राणिनस्तथोदकम्—अप्कायं, मृत्तिकां च पृथिवीकायं, 'च' शब्दात्तेजोवायुपरिग्रहः ॥ ३ ॥

अथाऽऽत्मसंयमविराधनापरिहारमाह—

ओवायं विसमं खाणुं विज्जलं परिवज्जए ।
संकमेण न गच्छिज्जा विज्जमाणे परक्कमे ॥ ४ ॥

छा० अवपातं विषमं स्थाणुं, विजलं परिवर्जयेत् ।
संक्रमेण न गच्छेत्, विद्यमाने पराक्रमे ॥ ४ ॥

'ओवायं०'—अवपातं—गर्तादिरूपं, विषमं—निम्नोन्नतम्, स्थाणुम्—ऊर्द्ध्वकाष्ठम्, विजलं—विगतजलं कर्दमं परिहरेत्, तथा संक्रमेण—जल-गर्त-परिहाराय पाषाणकाष्ठरचितेन न गच्छेत्, आत्मसंयमविराधनासम्भवात्, 'विद्यमाने पराक्रमे'—अन्यमार्गे इत्यर्थः, अपवादमाह—असति तु तस्मिन् प्रयोजनमाश्रित्य यतनया गच्छेत् ॥ ४ ॥
अवपातादौ दोषमाह—

पवडंते व से तत्थ पक्खलंते व संजए ।
हिंसिज्ज पाणभूआइं तसे अदुव थावरे ॥ ५ ॥
छा० प्रपतन्वा स तत्र, प्रस्खलन् वा संयतः ।
हिंस्यात्प्राणिभूतानि, त्रसानथवा स्थावरान् ॥ ५ ॥

'पवडंते०'—प्रपतन् वाऽसौ तत्राऽवपातादौ प्रस्खलन् वा संयतः, हिंस्यात्प्राणिभूतानि, एतदेवाह—'त्रसान् अथवा स्थावरान्', प्रपातेनाऽऽत्मानं चेत्युभयविराधना ॥ ५ ॥

तम्हा तेण न गच्छिज्जा संजए सुसमाहिए ।
सइ अण्णेण मग्गेणं जयमेव परक्कमे ॥ ६ ॥
छा० तस्मात्तेन न गच्छेत्, संयतः सुसमाहितः ।
सत्यन्यस्मिन्मार्गे, यतमेव पराक्रामेत् ॥ ६ ॥

'तम्हा तेण०'—तस्मात्तेनाऽवपातादिमार्गेण न गच्छेत्, संयतः सुसमाहितो भगवदाज्ञावर्तीत्यर्थः, सत्य (ताऽ) न्येन मार्गेण [ छान्दसत्वात् सप्तम्यर्थे तृतीया ] असति त्वन्यमार्गे तेनैवाऽवपातादिना यतमेव पराक्रामेत्, यतमिति क्रियाविशेषणम्, यतम्—आत्मसंयमविराधनापरिहारेण यायात् ॥ ६ ॥

विशेषतः पृथिवीकाययतनामाह—

इंगालं छारिअं रासिं तुसरासिं च गोमयं ।
ससरक्खेहिं पाएहिं संजओ तं नइक्कमे ॥ ७ ॥
छा० आङ्गारं क्षारराशिं, तुषराशिं च गोमयम् ।
सरजस्काभ्यां पद्भ्यां, संयतस्तं नाऽतिक्रामेत् ॥ ७ ॥

'इंगालं०'—आङ्गारमित्यङ्गाराणामयम्—आङ्गारः, तमाङ्गारराशिम्, एवं क्षारराशिं, तुषराशिं, गोमयं—गोमयराशिं च, 'राशि'—शब्दः प्रत्येकमभिसम्बध्यते, सरजस्काभ्यां पद्भ्यां, संयतस्तमनन्तरोदितं राशिं नाऽऽक्रामेत् ॥ ७ ॥ अप्कायादियतनामाह—

न चरिज्ज वासे वासंते महिआए व पडंतीए ।
महावाए व वायंते तिरिच्छसंपाइमेसु वा ॥ ८ ॥
छा० न चरेद्वर्षायां वर्षन्त्यां, मिहिकायां वा पतन्त्याम् ।
महावाते वा वाति, तिर्यक्संपाते( तिमे )षु वा ॥ ८ ॥

'न चरिज्ज०'—न चरेद्वर्षे वर्षति भिक्षाऽर्थम्, प्रविष्टो वर्षणे तु प्रच्छन्ने तिष्ठेत्, तथा मिहिकायां पतन्त्यां, सा च प्रायो गर्भमासेषु पतति, महावाते वा वाति सति, तदुत्खातरजोविराधनादोषात्, तिर्यक्सम्पतन्तीति तिर्यक्सम्पाताः—पतङ्गादयः, तेषु वा सत्सु कचिदपि—अशनिरूपेण न चरेत् ॥ ८ ॥ उक्ता प्रथमव्रतयतना, अथ चतुर्थव्रतयतनोच्यते—

न चरिज्ज वेससामंते बंभचेरवसाणए ।
बंभयारिस्स दंतस्स हुज्जा तत्थ विसुत्तिआ ॥ ९ ॥

छा० न चरेद्वेश्यासामन्ते, ब्रह्मचर्यवशानये(नयने) ।
ब्रह्मचारिणो दान्तस्य, भवेत्तत्र विस्रोतसिका ॥ ९ ॥

'न चरिज्ज०'—न चरेद्वेश्यासामन्ते—वेश्यागृहसमीपे, ब्रह्मचर्यवशाऽऽनयने—ब्रह्मचर्यम्-आत्मवशमानयति दर्शनाऽऽक्षेपादिनेति ब्रह्मचर्यवशाऽऽनयनम्, तस्मिन्, ब्रह्मचारिणो दान्तस्य इन्द्रियनोइन्द्रियदमाभ्यां भवेत्तत्र वेश्यासामन्ते विस्रोतसिका—तद्रूपसन्दर्शनस्मरणाऽपध्यान-कचवर-निरोधतो ज्ञानश्रद्धानजलोज्झनेन संयमसस्य-शोषफला चित्तविक्रिया ॥ ९ ॥

अणायणे चरंतस्स संसग्गीइ अभिक्खणं ।
हुज्ज वयाणं पीला सामण्णम्मि अ संसओ ॥ १० ॥

छा० अनायतने चरतः, सांसर्गिक्या(संसर्गेणा)ऽभीक्ष्णम् ।
भवेद्व्रतानां पीडा, श्रामण्ये च संशयः ॥ १० ॥

'अणायणे०'—अनायतने—अस्थाने वेश्यासामन्तादौ चरतः संसर्गेणाऽभीक्ष्णं पुनः पुनर्भवेद्व्रतानां पीडा तदाक्षिप्तचेतसो भावविराधना । श्रामण्ये च द्रव्यतो रजोहरणादिसन्धारणरूपे भूयो भावव्रतप्रधानहेतौ संशयः, कदाचिद्विनिष्क्रामेदेव। तथा च वृद्धव्याख्या-"वेसादिगयभावस्स मेहुणं पीडिज्जइ ४, अणुवओगेणं एसणाकरणे हिंसा १,

पडुप्पायणे अण्णपुच्छणअवलवणा असच्चवयणं २, अणणुण्णाय वेसाइदंसणे अदत्तादाणं ३, ममत्तकरणे परिग्गहो ५, एवं सव्ववयपीडा । दव्वसामण्णे पुण संसओ उण्णिक्खमणेणत्ति ' ॥ १० ॥

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं ।
वज्जए वेससामंतं मुणी एगंतमस्सिए ॥ ११ ॥
छा० तस्मादेतं विज्ञाय, दोषं दुर्गतिवर्द्धनम् ।
वर्जयेद्वेश्यासामन्तं, मुनिरेकान्तमाश्रितः ॥ ११ ॥

' तम्हा० '—तस्मादेतं विज्ञाय दोषं दुर्गतिवर्द्धनं वर्जयेद्वेश्यासामन्तं मुनिरेकान्तं—मोक्षमार्गमाश्रितः ॥ ११ ॥ आह-प्रथमव्रतविराधनाऽनन्तरं चतुर्थव्रतविराधनोपन्यासः किमर्थः ? उच्यते—प्राधान्यख्यापनार्थः, अन्यव्रतविराधना-हेतुत्वेन प्राधान्यम्, तच्च लेशतो दर्शितमेवेति, अत्रैव विशेषमाह—

साणं सूयं गाविं दित्तं गोणं हयं गयं ।
संडिब्भं कलहं जुद्धं दूरओ परिवज्जए ॥ १२ ॥
छा० श्वानं सूतां गां, दृप्तं गां हयं गजम् ।
संडिम्भं कलहं युद्धं, दूरतः परिवर्जयेत् ॥ १२ ॥



१ ' सूअं ' इत्यपि पाठो बहुत्र दृश्यते, सच नातीवशुद्धः प्रतिभाति ।

'साणं०'—श्वानं, सूतां गां—नवप्रसूतां, दृप्तं—दर्पितं गौर्बलीवर्दस्तम्, अश्वं, गजं, 'संडिम्भं'ति बालक्रीडास्थानम्, कलहं—वाक्प्रतिबद्धम्, युद्धं—खङ्गादिभिः, एतद् दूरतो—दूरेण परिवर्जयेत्, आत्मसंयमविराधनासम्भवात्, श्व—सूतगवी—प्रभृतिभ्य आत्मविराधना, डिम्भस्थाने वन्दनाद्यागमन—पतन—भण्डन—प्रलुठनादिना संयमविराधना। सर्वत्र चाऽऽत्मपात्रभेदादिनोभयविराधनेति ॥ १२ ॥

अणुण्णए नावणए अप्पहिट्ठे अणाउले ।
इंदिआणि जहाभागं दमइत्ता मुणी चरे ॥ १३ ॥

छा० अनुन्नतो नावनतः, अप्रहृष्टोऽनाकुलः ।
इन्द्रियाणि यथाभागं, दमयित्वा मुनिश्चरेत् ॥ १३ ॥

'अणुण्णए०'—अनुन्नतो द्रव्यतो नाऽऽकाशदर्शी, भावतो न जात्याद्यभिमानवान्, नाऽवनतः—द्रव्यतो न नीचकायः, भावतोऽलब्ध्यादिनाऽदीनः, अत्राऽप्रहृष्टः—अहसन्, अनाकुलः—क्रोधादिरहितः, इन्द्रियाणि—स्पर्शनादीनि यथाभागं—यथाविषयं दमयित्वा मुनिश्चरेत्, विपर्यये प्रभूतदोषप्रसङ्गात्, तथाहि—द्रव्योन्नतो—लोकहास्यः, भावोन्नतो—र्नेर्यां रक्षति, द्रव्याऽवनतो बक इति सम्भाव्यते, भावाऽवनतः क्षुद्रसत्त्व इति, प्रहृष्टो—योषिद्दर्शनाद्रक्त इति लक्ष्यते, आकुल एवमेव, अदान्तः प्रव्रज्याऽनर्हः ॥ १३ ॥



दवदवस्स न गच्छिज्जा भासमाणो अ गोअरे ।
हसंतो नाभिगच्छिज्जा कुलं उच्चावयं सया ॥ १४ ॥

छा० द्रुतं द्रुतं न गच्छेत्, भाषमाणश्च गोचरे ।
हसन्नाभिगच्छेत्, कुलमुच्चावचं सदा ॥ १४ ॥

'दवदवस्स०'—द्रुतं द्रुतं त्वरितमित्यर्थः, न गच्छेत्, भाषमाणो वा गोचरे न गच्छेत्, हसन्नाऽभिगच्छेत्, कुलमुच्चावचं सदा, उच्चं—द्रव्यभावभेदाद्विधा—द्रव्योच्चं—धवलगृहवासि, भावोच्चं—जात्यादियुक्तम्, एवमवचमपि—द्रव्यतः कुटीरवासि, भावतो जात्यादिहीनमिति । दोषा उभयविराधना-लोकोपघातादयः ॥ १४ ॥

आलोअं थिग्गलं दारं संधिं दगभवणाणि अ ।
चरंतो न विणिज्झाए संकट्ठाणं विवज्जए ॥ १५ ॥

छा० आलोकं चितं(थिग्गलं) द्वारं, सन्धिमुदकभवनानि च ।
चरन्न विनिध्यायेत्, शङ्कास्थानं विवर्जयेत् ॥ १५ ॥

'आलोअं०'—अवलोकं—निर्यूहकादिरूपम्, थिग्गलं—चितं, द्वारादि, सन्धिश्चितं क्षत्रम्, उदकभवनानि—पानीयगृहान्, चरन् भिक्षार्थं न 'विणिज्झाएत्ति'—न पश्येत्, शङ्कास्थानमेतदवलोकादि, अतो विवर्जयेत्, तथा च नष्टादौ तत्र शङ्कोपजायते ॥ १५ ॥

रण्णो गिहवईणं च रहस्सारक्खिआण य ।
संकिलेसकरं ठाणं दूरओ परिवज्जए ॥ १६ ॥

छा० राज्ञो गृहपतीनाञ्च, रहस्यमारक्षकाणाञ्च ।
संक्लेशकरं स्थानं, दूरतः परिवर्जयेत् ॥ १६ ॥

'रण्णो०'—राज्ञश्चक्रवर्त्यादेर्गृहपतीनां—श्रेष्ठिप्रभृतीनां 'रहस्सठाणं' इति योगः, आरक्षकाणाञ्च—दण्डनायकादीनां रहःस्थानं—गुह्यापवरकमन्त्रगृहादि, संक्लेशकरम्—असक्तदिच्छा-प्रवृत्त्या मन्त्रभेदे वा कर्षणादिना ॥१६॥

पडिकुट्ठकुलं न पविसे मामगं परिवज्जए ।
अचिअत्तकुलं न पविसे चिअत्तं पविसे कुलं ॥ १७ ॥

छा० प्रतिक्रुष्टकुलं न प्रविशेत्, मामकं परिवर्जयेत् ।
अप्रीतिकुलं न प्रविशेत्, प्रीतं प्रविशेत्कुलम् ॥ १७ ॥

'पडिकुट्ठ०'—प्रतिकुष्टम्—इत्वरयावत्कथिकभेदाद्द्विविधम्, इत्वरं—सूतकयुक्तम्, यावत्कथिकम्—अभोज्यम्, एतन्न प्रविशेत्, शासनलघुत्वप्रसङ्गात् । 'मामकं'—यनाऽऽह गृहपतिर्मा मे कश्चिद् गृहमागच्छतु, एतद्वर्जयेत्, भण्डनादिप्रसङ्गात् । 'अचियत्तकुलं'—अप्रीतिकुलं यत्र प्रविशद्भिः साधुभिरप्रीतिरुत्पद्यते, न च निवारयन्ति कुतश्चिन्निमित्तान्तरात्, एतदपि न प्रविशेत्, तत्संक्लेशनिमित्तप्रसङ्गात्, 'चियत्तं'—अचियत्तविपरीतम् प्रविशेत्कुलम्, तदनुग्रहप्रसङ्गादिति ॥ १७ ॥

---

१ अप्रीतिकरं । २ प्रीतिकर ।

साणीपावारपिहिअं अप्पणा नावपंगुरे ।
कवाडं णो पणुल्लिज्जा उग्गहंसि अजाइआ ॥ १८ ॥
छा० शाणीप्रावारपिहितम्, आत्मना नाऽपवृणुयात् ।
कपाटं न प्रणोदयेत्, अवग्रहमयाचित्वा ॥ १८ ॥

'साणी०'—साणी—सणातसी—वल्कजापटी, प्रावारो जवनिकादिः, कम्बल्याद्युपलक्षणमेतत्, एवमादिभिः पिहितं गृहमिति वाक्यशेषः, आत्मना स्वयं नाऽपवृणुयात्—नोद्घाटयेद् इत्यर्थः, किमविशेषेण ? नेत्याह—'अवग्रहमयाचित्वा'—आगाढप्रयोजने—अननुज्ञाप्याऽवग्रहं, विधिना धर्मलाभमकृत्वेति ॥ १८ ॥

गोअरग्गपविट्ठो उ (अ) वच्चमुत्तं न धारए ।
ओगासं फासुअं नच्चा, अणुण्णविअ वोसिरे ॥ १९ ॥
छा० गोचराग्रप्रविष्टस्तु(श्च), वर्चोमूत्रं न धारयेत् ।
अवकाशं प्रासुकं ज्ञात्वा, अनुज्ञाप्य व्युत्सृजेत् ॥ १९ ॥

'गोअरग्ग०'—गोचराऽग्रप्रविष्टो मुनिर्वर्चोमूत्रं वा न धारयेत्, अवकाशं प्रासुकं ज्ञात्वा, अनुज्ञाप्य व्युत्सृजेदिति । अस्य विषयो वृद्धसम्प्रदायादवसेयः । सचाऽयम्—" पुव्वमेव साहुणा सण्णाकाइओवओगं काऊण गोयरे

१ "धर्मलाभ" इतिपदं नागमोपज्ञम्, अपि तु दुर्भिक्षोपप्लुतानां भिक्षूणामाहाराद्यवश्यलाभाय कल्पितमित्यैतिह्यम्, अन्यथा धर्मलाभाऽऽशया प्रत्ताऽऽहारस्याकल्पनीयत्वात्, कथं तत्पदमभिदधीरन् धीरा मुनयः ?

पविसिअव्वं, कहिंचि ण कओ, कए वा पुणो हुज्जा, ताहे वच्चमुत्तं न धारिअव्वं, जओ मुत्तनिरोहे चक्खुवघाओ भवइ, वच्चनिरोहे अ जीविओवघाओ, असोहणा अ आयविराहणा। जओ भणिअं–" सव्वत्थ संजम " इत्यादि, अतो–' संघाडयस्स भायणाणि समप्पिअ पडिस्सए पाणयं गहाय सण्णाभूमीए विहिणा वोसिरिज्जा,' वित्थरओ जहा ओहणिज्जुत्तिए " त्ति ॥ १९ ॥

नीअदुवारं तमसं कुट्ठगं परिवज्जए ।
अचक्खुविसओ जत्थ पाणा दुप्पडिलेहगा ॥ २० ॥

छा० नीचद्वारं तमस्विनं, कोष्ठकं परिवर्जयेत् ।
अचक्षुर्विषयो यत्र, प्राणाः दुष्प्रतिलेख्याः ॥ २० ॥

' नीअदुवारं०'–नीचद्वारं–नीचनिर्गमप्रवेशम्, तमसामिति तमोवन्तं ( तमस्विनं ) कोष्ठकमपवरकं परिवर्जयेत्, न तत्र भिक्षां गृह्णीयात्। सामान्याऽपेक्षया सर्वं एवंविधो भवति, अत आह–' अचक्षुर्विषयो यत्र'–न चक्षुषोर्व्यापारो यत्रेत्यर्थः, अत्र दोषमाह–प्राणिनो दुष्प्रतिप्रेक्षणीया भवन्ति–ईर्याशुद्धिर्न भवतीति ॥ २० ॥

जत्थ पुप्फाइं बीआइं विप्पइण्णाइं कुट्ठए ।
अहुणोवलित्तं उल्लं दट्ठूणं परिवज्जए ॥ २१ ॥

छा० यत्र पुष्पाणि बीजानि, विप्रकीर्णानि कोष्ठके ।
अधुनोपलिप्तमार्द्रं, दृष्ट्वा परिवर्जयेत् ॥ २१ ॥

'जत्थ०'—यत्र पुष्पाणि बीजानि विप्रकीर्णानि—अनेकधा विक्षिप्तानि—परिहर्तुमशक्यानीत्यर्थः, कोष्ठके तद्वारे वा, अधुनोपलिप्तमार्द्रं कोष्ठकमन्यद्वा दृष्ट्वा परिवर्जयेद् दूरत एव। न तु तत्र धर्मलाभं[1] कुर्यात्, संयमाऽऽत्मविराधनोपपत्तेः ॥ २१ ॥

**एलगं दारगं साणं वच्छगं वा वि कुट्ठए ।**
**उल्लंघिआ न पविसे विऊहित्ताण व संजए ॥ २२ ॥**

छा० **एडकं दारकं श्वानं, वत्सकं वाऽपि कोष्ठके ।**
**उल्लङ्घ्य न प्रविशेत्, व्यूह्य वा संयतः ॥ २२ ॥**

'एलगं०'—एडकं—मेषम्, दारकं—बालम्, श्वानं—मण्डलम्, वत्सकं वाऽपि क्षुद्रवृषभलक्षणम्, कोष्ठके उल्लङ्घ्य पद्भ्यां न प्रविशेत्, व्यूह्य वा—प्रेर्य वेत्यर्थः, संयतो न प्रविशेत्, आत्मसंयमविराधनादोषालाघवाच्चेति ॥ २२ ॥

**असंसत्तं पलोइज्जा नाइदूरावलोअए ।**
**उप्फुल्लं न विणिज्झाए निअट्टिज्ज अयंपिरो ॥ २३ ॥**

छा० **असंसक्तं प्रलोकयेत्, नातिदूरमवलोकयेत् ।**
**उत्फुल्लं न विनिर्ध्यायेत्, निवर्तेताऽजल्पाकः ॥ २३ ॥**

[1] आहारलाभं न कुर्यादित्यर्थः । पृष्ठ ९२ देखो—

'असंसत्तं०'—असंसक्तं प्रलोकयेत्-न योषिद्दृष्टेर्दृष्टिं मीलयेदित्यर्थः, रागोत्पत्तिलोकोपघातदोषात्, *नातिदूरं प्रलोकयेत्-दायकस्याऽऽगमनमात्रदेशं प्रलोकयेत्*, परतश्चौरादिशङ्कादोषः । उत्फुल्लं-विकसिताऽक्ष, 'न विणिज्झाएत्ति'-न निरीक्षेत गृहपरिच्छदमपि, अदृष्टकल्याण इति लाघवोत्पत्तेः । निवर्तेत-अलब्धेऽपि सति, अजल्पन्-दीनवचनमनुच्चारयन् ॥ २३ ॥

अइभूमिं न गच्छिज्जा गोअरग्गगओ मुणी ।
कुलस्स भूमिं जाणित्ता मिअं भूमिं परक्कमे ॥ २४ ॥

छा० अतिभूमिं न गच्छेत्, गोचराग्रगतो मुनिः ।
कुलस्य भूमिं ज्ञात्वा, मितां भूमिं पराक्रामेत् ॥ २४ ॥

'अइभूमिं०'—अतिभूमिं न गच्छेत्—अननुज्ञाता गृहस्थैर्यत्राऽन्ये भिक्षाचरा नाऽऽयान्तीत्यर्थः । 'गोचराग्रगतो मुनिः'-अनेन अन्यदा तद्गमनाऽसम्भवमाह, किन्तर्हि? कुलस्य भूमिम्-उत्तमाऽऽदिरूपामवस्थां ज्ञात्वा, मितां भूमिं-तैरनुज्ञातां पराक्रामेत, यत्रैषामप्रीतिर्न जायते ॥ २४ ॥

तत्थेव पडिलेहिज्जा भूमिभागं विअक्खणो ।
सिणाणस्स य वच्चस्स संलोगं परिवज्जए ॥ २५ ॥

छा० तत्रैव प्रतिलिखेत्, भूमिभागं विचक्षणः ।
स्नानस्य च वर्चसः, संलोकं परिवर्जयेत् ॥ २५ ॥

'तत्थेव०'— तत्रैव तस्यामेव मितायां भूमौ प्रत्युपेक्षेत सूत्रोक्तेन विधिना भूमिभागमुचितं विचक्षणो-विद्वान्, अनेन केवलाऽगीताऽर्थस्य भिक्षाऽटनप्रतिषेधमाह, तत्र च तिष्ठन् स्नानस्य तथा वर्चसः संलोकं परिवर्जयेत्। एतदुक्तं स्यात्— स्नानभूमि-कायिकाऽऽदिभूमिदर्शनं परिहरेत्, प्रवचनलाघवप्रसङ्गात्, अप्रावृतस्त्रीदर्शनाच्च रागादिभावादिति ॥ २५ ॥

दगमट्टिअ आयाणे बीआणि हरिआणि अ ।
परिवज्जंतो चिट्ठिज्जा सव्विंदिअसमाहिए ॥ २६ ॥

छा० उदकमृत्तिकाऽऽदानं, बीजानि हरितानि च ।
परिवर्जयंस्तिष्ठेत्, सर्वेन्द्रियसमाहितः ॥ २६ ॥

'दगमट्टिअ०'—उदकमृत्तिकाऽऽदानम्—आदीयतेऽनेनेत्यादानो-मार्गः, तदाऽऽनयनमार्ग इत्यर्थः, 'बीजानि हरितानि च'-'च' शब्दादन्यानि सचेतनानि परिवर्जयन्, तिष्ठेदनन्तरोदिते देशे, 'सर्वेन्द्रियसमाहितः'—शब्दादिभिरव्याक्षिप्त इति ॥ २६ ॥

तत्थ से चिट्ठमाणस्स आहरे पाणभोअणं ।
अकप्पिअं न गिण्हिज्जा[1] पडिगाहिज्ज कप्पिअं ॥ २७ ॥

छा० तत्र तस्य तिष्ठतः, आहरेत्पानभोजनम् ।
अकल्पिकं न गृह्णीयात्, प्रतिगृह्णीयात् कल्पिकम् ॥ २७ ॥



१ 'इच्छिज्जा' इत्यपि पाठः ।

'तत्थ०'—तत्र से-तस्य तिष्ठतः साधोः, आहरेत्—आनयेत् पानभोजनं, गृहीति गम्यते। तत्राऽयं विधिः—अकल्पनीयमनेषणीयं न प्रतिगृह्णीयात्, प्रतिगृह्णीयात्कल्पिकमेषणीयम्। एतच्चाऽर्थादापन्नमपि कल्पिकग्रहणं द्रव्यतः शोभनमशोभनमप्येतदविशेषेण ग्राह्यमिति दर्शनार्थं साक्षादुक्तम् ॥ २७ ॥

आहरंती सिआ तत्थ परिसाडिज्ज भोअणं।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ २८ ॥
छा० आहरन्ती स्यात्तत्र, परिशाटयेद्भोजनम्।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ २८ ॥

'आहरंती०'—आहरन्ती—आनयन्ती भिक्षामगारी(रिणी)ति गम्यते, स्यात् तत्र—कदाचित्तत्रदेशे परिशाटयेत्—इतश्चेतश्च विक्षिपेद् भोजनं पानं वा, ततः किमित्याह—ददतीं प्रत्याचक्षीत—प्रतिषेधयेत् तामगारिणीम्, स्त्र्येव प्रायो भिक्षां ददातीति स्त्रीग्रहणम्, कथं प्रत्याचक्षीत? इत्याह—न मे-मम कल्पते तादृशं परिशाटनवत्, सम-योक्तदोषप्रसङ्गात्, दोषांश्च भावं ज्ञात्वा कथयेन्मधुबिन्दूदाहरणादिना ॥ २८ ॥

सम्मद्दमाणी पाणाणि बीआणि हरिआणि अ।
असंजमकरिं नच्चा तारिसिं परिवज्जए ॥ २९ ॥
छा० संमर्दयन्ती प्राणिनः, बीजानि हरितानि च।
असंयमकरीं ज्ञात्वा, तादृशीं परिवर्जयेत् ॥ २९ ॥

'सम्मद्दमाणी०'–संमर्दयन्ती पद्भ्यां, कान्? इत्याह–प्राणिनो बीजानि हरितानि च, असंयमकरीं–साधुनिमित्तमसंयमकरणशीलां ज्ञात्वा तादृशीं परिवर्जयेत्, ददतीं प्रत्याचक्षीत ॥ २९ ॥

साहट्टु निक्खिवित्ताणं सच्चित्तं घट्टिआण अ।
तहेव समणट्ठाए उदगं संपणुल्लिआ ॥ ३० ॥

छा० संहृत्य निक्षिप्य, सचित्तं घट्टयित्वा च।
तथैव श्रमणार्थाय, उदकं सम्प्रणुद्य ॥ ३० ॥

'साहट्टु०'–संहृत्याऽन्यस्मिन् भाजने ददाति। "तत्थ फासुए फासुअं साहरइ १, फा० अ० सा० २, अफा० फा० सा० ३, अफा०, अफा०, सा० ४। तत्थ जं फासुए फासुअं तत्थ वि थोवे थोवं सा० १, थोवे बहुअं सा० २, बहुए थोवं सा० ३, बहुए बहुअं सा० ४, एवमादि," यथा पिण्डनिर्युक्तौ तथा ज्ञेयम्। निक्षिप्य भाजनगतमदेयं षट्सु जीवनिकायेषु ददाति, तथा सचित्तमलातपुष्पादि घट्टयित्वा–संचाल्य च ददाति, तथैव श्रमणाऽर्थम्–उदकं सम्प्रणुद्य–भाजनस्थं प्रेर्य ददाति ॥ ३० ॥

ओगाहइत्ता चलइत्ता आहरे पाणभोअणं।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ३१ ॥

छा० अवगाह्य चालयित्वा, आहरेत्पानभोजनम्।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ३१ ॥

'ओगाहइत्ता०'—अवगाह्य—उदकमेवाऽऽत्माऽभिमुखमाकृष्य ददाति, तथा चालयित्वा—उदकमेव ददाति, उदके नियमादनन्तवनस्पतिरिति 'सचित्तं घट्टयित्वा' इत्युक्तेऽपि प्राधान्यार्थं भेदेनोपादानम्, अस्ति चाऽयं न्यायो यदुत—सामान्यग्रहणेऽपि प्राधान्यख्यापनार्थं भेदेनोपादानम्। ततश्च--उदकं चालयित्वा, आहरेत्-आनीयात्—दद्यादित्यर्थः, किन्तत्? इत्याह—'पानभोजनं'-ओदनाऽऽरनालादि, तदित्थम्भूतां ददतीं प्रत्याचक्षीत मम न कल्पते तादृशम् ॥ ३१ ॥

पुरेकम्मेण हत्थेण दव्वीए भायणेण वा ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ३२ ॥
छा० पुरःकर्मणा हस्तेन, दर्व्या भाजनेन वा ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ३२ ॥

'पुरेकम्मेण०'—पुरःकर्मणा हस्तेन साध्वर्थं प्राक्कृतजलोज्झनेन, तथा दर्व्या—डोवसदृश्या, भाजनेन वा कांस्यभाजनादिना, (ददतीं प्रत्याचक्षीत) शेषं पूर्ववत् ॥ ३२ ॥

एवं उदउल्ले ससिणिद्धे ससरक्खे मट्टिआ ऊसे ।
हरिआले हिंगुलए मणोसिला अंजणे लोणे ॥ ३३ ॥



---

१ यथा—'ब्राह्मणा आयाता वसिष्ठोऽप्यायातः' इति ।

छा० एवमुदकार्द्रः सस्निग्धः, सरजस्को मृत्तिका ऊषः ।
हरितालः हिङ्गुलकः, मनःशिलाऽञ्जनं लवणम् ॥ ३३ ॥

'एवं उद०'—एवमुदकाऽऽर्द्रेण हस्तेन—गलदुदकबिन्दुना करेण, एवं सस्निग्धेन हस्तेन—ईषदुदकयुक्तेन, एवं सरजस्केन हस्तेन—भूरजोगुण्ठितेन, एवं मृद्गतेन हस्तेन—कर्दमयुक्तेन, एवमूषादिष्वपि योज्यम्, एतावन्त्येवेतानि सूत्राणि । नवरम्—ऊषः-पांशुक्षारः, हरिताल-हिङ्गुलक-मनःशिलाः—पार्थिवा वर्णकभेदाः, अञ्जनं—रसाञ्जनादि, लवणं—सामुद्रादि ॥ ३३ ॥

गेरुअ-वण्णिअ-सेडिअ-सोरट्ठिअ-पिट्ठ-कुक्कुसकए अ ।
उक्किट्ठमसंसट्ठे संसट्ठे चेव बोधव्वे ॥ ३४ ॥

छा०-गैरिक-वर्णिक-श्वेतिक (सेटिक)-सौराष्ट्रिक-पिष्ट-कुक्कुसकृते(न) च ।
उत्कृष्टमसंसृष्टः, संसृष्टश्चैव बोद्धव्यः ॥ ३४ ॥

'गेरुअ०'—गैरिको धातुः, वर्णिका—पीतमृत्तिका, श्वेतिका—श्वेतमृत्तिका, सौराष्ट्रिका—तुवरिका, पिष्टम्—आमतण्डुलक्षोदः, कुक्कुसाः प्रतीताः, कृतेनेति—एभिः कृतेन हस्तेनेति गम्यते । उत्कृष्टशब्देन कालिङ्गाऽलाबुत्रपुषफलादीनां शस्त्रकृतानि श्लक्ष्णखण्डानि भण्यन्ते, चिञ्चिणिकादि—पत्रसमुदायो वा उदूखलख(क)ण्डितः, असंसृष्टो व्यञ्जनादिनाऽलिप्तः, संसृष्टश्चैव व्यञ्जनालिप्तो बोद्धव्यो हस्त इति, विधिं पुनरत्रोर्ध्वं स्वयमेव वक्ष्यति ॥ ३४ ॥



१ अत्र 'एभिः संसृष्टेन हस्तेन' एतदर्थं विभक्तिपरिवर्तनं विधेयम् । छायाया मूलाऽनुरोधाद् यथावस्थमनूदितम् ।

असंसट्ठेण हत्थेण दव्वीए भायणेण वा ।
दिज्जमाणं न इच्छिज्जा पच्छाकम्मं जहिं भवे ॥ ३५ ॥

छा० असंसृष्टेन हस्तेन, दर्व्या भाजनेन वा ।
दीयमानं नेच्छेत्, पश्चात्कर्म यत्र भवेत् ॥ ३५ ॥

'असंसट्ठेण०'—असंसृष्टेन हस्तेन—अन्नादिभिरलिप्तेन दर्व्या भाजनेन वा दीयमानं नेच्छेत्, पश्चात्कर्म भवति यत्र दर्व्यादौ, शुष्कमण्डकादिवत्, तदन्यद् दोषरहितं गृह्णीयात् ॥ ३५ ॥

संसट्ठेण य हत्थेण दव्वीए भायणेण वा ।
दिज्जमाणं पडिच्छिज्जा जं तत्थेसणिअं भवे ॥ ३६ ॥

छा० संसृष्टेन च हस्तेन, दर्व्या भाजनेन वा ।
दीयमानं प्रतीच्छेत्, यत्तत्रैषणीयं भवेत् ॥ ३६ ॥

'संसट्ठेण०'—( संसृष्टादिविशेषणयुतं तु ) 'पडिच्छिज्जत्ति'—प्रतीच्छेत्—गृह्णीयात्, किं सामान्येन? इत्याह—यत् तत्रैषणीयं भवति तदन्यदोषरहितमित्यर्थः, इह च वृद्धसम्प्रदायः—"संसट्ठे हत्थे सं० मत्ते सावसेसे

दव्वे १, सं० हत्थे सं० मत्ते निरवसेसे दव्वे २, सं० हत्थे असं० मत्ते सावसेसे दव्वे ३, एवं अट्ठभंगा, इत्थ पढमो सव्वुत्तमो, अण्णेसु वि जत्थ सावसेसं दव्वं तत्थ घिप्पइ, ण इअरेसु, पच्छाकम्म दोसओ" त्ति ॥ ३६ ॥



दुण्हं तु भुंजमाणाणं एगो तत्थ निमंतए ।
दिज्जमाणं न इच्छिज्जा छंदं से पडिलेहए ॥ ३७ ॥

छा० द्वयोस्तु भुञ्जानयोः, एकस्तत्र निमन्त्रयेत् ।
दीयमानं नेच्छेत, छन्दं तस्य प्रतिलेखयेत् ॥ ३७ ॥

'दुण्हं०'–'द्वयोर्भुञ्जतोः(भुञ्जानयोः)–एकवस्तुस्वामिनोरित्यर्थः,' एकस्तत्र निमन्त्रयेत्, तद्दीयमानं नेच्छेत, उत्सर्गतः, अपि तु छन्दमभिप्रायं से–तस्य द्वितीयस्य प्रत्युपेक्षेत, नेत्रवक्त्रविकारैः, किमस्येदमिष्टं दीयमानं न वेति, इष्टं च गृह्णीयात्, न चेन्नैवेति, एवं भुञ्जानयोरभ्यवहारायोद्यतयोरपि योजनीयम्, [ यतो भुजिः पालनेऽभ्यवहारे च वर्तते ] ॥ ३७ ॥



दुण्हं तु भुंजमाणाणं दोवि तत्थ निमंतए ।
दिज्जमाणं पडिच्छिज्जा जं तत्थेसणिअं भवे ॥ ३८ ॥

छा० द्वयोस्तु भुञ्जानयोः, द्वावपि तत्र निमन्त्रयेताम् ।
दीयमानं प्रतीच्छेत, यत्तत्रैषणीयं भवेत् ॥ ३८ ॥



'दुण्हं०'—द्वावपि तत्र निमन्त्रयेताम्, दीयमानं प्रतीच्छेत, यत्तत्रैषणीय भवेत्, तदन्यद् दोषरहित-मित्यर्थः ॥ ३८ ॥

गुव्विणीए उवण्णत्थं विविहं पाणभोअणं ।
भुंजमाणं विवज्जिज्जा भुत्तसेसं पडिच्छए ॥ ३९ ॥

छा० गुर्विण्या उपन्यस्तं, विविधं पानभोजनम् ।
भुज्यमानं विवर्जयेत्, भुक्तशेषं प्रतीच्छेत् ॥ ३९ ॥

'गुव्विणीए०'—गर्भवत्याः कल्पितमुपन्यस्तं विविधं पानभोजनं—द्राक्षापानखण्डखाद्यादि, तत्र भुज्यमानं तया विवर्ज्यम्, मा भूत्तस्या अल्पेनाऽभिलाषाऽनिवृत्त्या गर्भपातादिदोष इति, भुक्तशेषं—भुक्तोद्वरितं प्रतीच्छेत्, यत्र तस्या निवृत्तोऽभिलाष इति ॥ ३९ ॥



सिआ य समणट्ठाए गुव्विणी कालमासिणी ।
उट्ठिआ वा निसीइज्जा निसण्णा वा पुणुट्ठए ॥ ४० ॥

छा० स्याच्च श्रमणार्थं, गुर्विणी कालमासवती ।
उत्थिता वा निषीदेत्, निषण्णा वा पुनरुत्तिष्ठेत् ॥ ४० ॥





'सिआ०'—स्यात्कदाचित्साधुनिमित्तं गुर्विणी पूर्वोक्ता वा (कालमासवती), गर्भाऽऽधानान्नवमासवतीत्यर्थः, उत्थिता वा यथाकथञ्चिन्निषीदेत्, निषण्णा वा स्वव्यापारेण पुनरुत्तिष्ठेत्, ददामीति साधुनिमित्तमेवेति ॥ ४० ॥

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ४१ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ४१ ॥

'तं भवे०'—तद् भवेद् भक्तपानं तु संयतानामकल्पिकम्, इह च स्थविरकल्पिकानामनिषी(ष)दनोत्थानाभ्यां यथाऽवस्थितया दीयमानं कल्पिकम्, जिनकल्पिकानां तु आपन्नसत्त्वया प्रथमदिवसादारभ्य सर्वथा दीयमानमकल्पिकमेवेति सम्प्रदायः, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मे कल्पते तादृशम् ॥ ४१ ॥



थणगं पिज्जमाणी दारगं वा कुमारिअं ।
तं निक्खिवित्तु रोअंतं आहरे पाणभोअणं ॥ ४२ ॥

छा० स्तन्यं पाययन्ती, दारकं वा कुमारिकाम् ।
तौ निक्षिप्य रुदन्तौ, आहरेत्पानभोजनम् ॥ ४२ ॥

'थणगं०'–स्तनं(न्यं) पाययन्ती दारकं कुमारिकां वा, वा भिन्नक्रमः, तं दारकादिं निक्षिप्य रुदन्तं भूम्यादौ–आहरेत्पानभोजनम्, अत्राऽयं वृद्धसम्प्रदायः–"गच्छवासी जइ थणजीवी पिअंतो णिक्खित्तो तो न गिण्हंति, रोवउ वा मा वा, अह अण्णं पि आहारेइ तो जति ण रोवइ तो गिण्हंति, अह रोवइ तो ण गिण्हंति, अह अपिअंतओ णिक्खित्तो थणजीवी रोवइ तओ ण गिण्हंति, अह ण रोवति तो गिण्हंति । गच्छणिग्गया पुण जाव थणजीवी ताव रोवउ वा मा वा पिअंतओ वा अपिअंतओ वा ण गिण्हंति, जाहे अण्णं पि आहारेउं आढत्तो भवति, ताहे जइ पिअंतओ तो रोवउ वा मा वा ण गिण्हंति, अह अपिअंतओ तो जइ रोवइ तो परिहरंति, अरोविए गिण्हंति, सीसो आह–' को तत्थ दोसोत्ति(त्थि) ? ' आयरिओ भणइ–' तस्स णिक्खिप्पमाणस्स खरेहिं हत्थेहिं घिप्पमाणस्स अथिरत्तणेण परियावणादोसो मज्जारादि वा अवहरेज्ज'त्ति " ॥ ४२ ॥

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ४३ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ४३ ॥

छा० स्याच्च श्रमणार्थं, गुर्विणी कालमासवती ।
उत्थिता वा निषीदेत्, निषण्णा वा पुनरुत्तिष्ठेत् ॥ ४० ॥

'सिआ०'—स्यात्कदाचित्साधुनिमित्तं गुर्विणी पूर्वोक्ता वा (कालमासवती), गर्भाऽऽधानान्नवमासवतीत्यर्थः, उत्थिता वा यथाकथञ्चिन्निषीदेत्, निषण्णा वा स्वव्यापारेण पुनरुत्तिष्ठेत्, ददामीति साधुनिमित्तमेवेति ॥ ४० ॥

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ४१ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ४१ ॥

'तं भवे०'—तद् भवेद् भक्तपानं तु संयतानामकल्पिकम्, इह च स्थविरकल्पिकानामनिषी(ष)दनोत्थानाभ्यां यथाऽवस्थितया दीयमानं कल्पिकम्, जिनकल्पिकानां तु आपन्नसत्त्वया प्रथमदिवसादारभ्य सर्वथा दीयमानमकल्पिकमेवेति सम्प्रदायः, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मे कल्पते तादृशम् ॥ ४१ ॥



थणगं पिज्जमाणी दारगं वा कुमारिअं ।
तं निक्खिवित्तु रोअंतं आहरे पाणभोअणं ॥ ४२ ॥

छा० स्तन्यं पाययन्ती, दारकं वा कुमारिकाम् ।
तौ निक्षिप्य रुदन्तौ, आहरेत्पानभोजनम् ॥ ४२ ॥

'थणगं०'–स्तनं(न्यं) पाययन्ती दारकं कुमारिकां वा, वा भिन्नक्रमः, तं दारकादिं निक्षिप्य रुदन्तं भूम्यादौ–आहरेत्पानभोजनम्, अत्राऽयं वृद्धसम्प्रदायः–"गच्छवासी जइ थणजीवी पिअंतो णिक्खित्तो तो न गिण्हंति, रोवउ वा मा वा, अह अण्णं पि आहारेइ तो जति ण रोवइ तो गिण्हंति, अह रोवइ तो ण गिण्हंति, अह अपिअंतओ णिक्खित्तो थणजीवी रोवइ तओ ण गिण्हंति, अह ण रोवति तो गिण्हंति । गच्छणिग्गया पुण जाव थण-जीवी ताव रोवउ वा मा वा पिअंतओ वा अपिअंतओ वा ण गिण्हंति, जाहे अण्णं पि आहारेउं आढत्तो भवति, ताहे जइ पिअंतओ तो रोवउ वा मा वा ण गिण्हंति, अह अपिअंतओ तो जइ रोवइ तो परिहरंति, अरोविए गिण्हंति, सीसो आह–'को तत्थ दोसोत्ति(त्थि)?' आयरिओ भणइ–'तस्स णिक्खिप्पमाणस्स खरेहिं हत्थेहिं घिप्पमाणस्स अथिरत्तणेण परियावणादोसो मज्जारादि वा अवहरेज्ज'त्ति" ॥ ४२ ॥

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ४३ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ४३ ॥

'तं भवे०'—व्याख्या पूर्ववत् ॥ ४३ ॥

जं भवे भत्तपाणं तु कप्पाकप्पम्मि संकिअं ।
दितिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ४४ ॥

छा० यद्भवेद्भक्तपानं तु, कल्पाकल्पयोः शङ्कितम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ४४ ॥

'जं भवे०'—यद् भवेद् भक्तपानं तु कल्पाऽकल्पयोः—कल्पनीयाऽकल्पनीय—धर्मविषय इत्यर्थः, किम् ? शङ्कित—न विद्म: किमिदमुद्गमादिदोषयुक्तं किं वा नेति, एवमाशङ्काऽऽस्पदीभूतम्, तदित्थम्भूतमसति कल्पनीयनिश्चये 'दिंतिअ०'—( व्याख्या पूर्ववत् ) ॥ ४४ ॥

दगवारेण पिहिअं नीसाए पीढएण वा ।
लोढेण वा वि लेवेण सिलेसेण व केणइ ॥ ४५ ॥

छा० उदककुम्भेन पिहितं, पेषण्या पीठकेन वा ।
शिलापुत्रकेण(लोढेन) वाऽपि लेपेन, श्लेषेण वा केनचित् ॥ ४५ ॥

'दगवारेण०'–'दगवारेण'–उदककुम्भेन पिहितं भाजनस्थं सन्तं स्थगितं, 'नीसाएत्ति'-पेषण्या, पीठकेन वा–काष्ठपीठादिना, 'लोढेण वा'–शिलापुत्रकेण, लेपेन–मृल्लेपादिना, श्लेषेण वा–केनचिज्जतुसम्बन्धिसिक्थादिना ॥ ४५ ॥

तं च उब्भिंदिआ दिज्जा समणट्ठाए व दावए ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ४६ ॥

छा० तच्चोद्भिद्य दद्यात्, श्रमणार्थं वा दापयेत् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ४६ ॥

'तं च उब्भिंदिआ०'–तच्च स्थगितं लिप्तं वा सत्, उद्भिद्य–उद्घाट्य दद्यात्, च श्रमणार्थमेव 'दायको नाऽऽत्मा(न्या)र्थम् ॥ ४६ ॥

असणं पाणगं वा वि खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा दाणट्ठा पगडं इमं ॥ ४७ ॥

छा० अशनं पानकं वाऽपि, खाद्यं स्वाद्यं तथा ।
यज्जानीयाच्छृणुयाद्वा, दानार्थं प्रकृतमिदम् ॥ ४७ ॥



---

१ मधुरिक्तं मधुच्छत्रं सिक्थमित्युच्यते । २ 'दायिका' इति वा ।

'तं भवे०'—व्याख्या पूर्ववत् ॥ ४३ ॥

जं भवे भत्तपाणं तु कप्पाकप्पम्मि संकिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ४४ ॥

छा० यद्भवेद्भक्तपानं तु, कल्पाकल्पयोः शङ्कितम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ४४ ॥

'जं भवे०'—यद् भवेद् भक्तपानं तु कल्पाऽकल्पयोः—कल्पनीयाऽकल्पनीय—धर्मविषय इत्यर्थः, किम्? शङ्कितं—न विद्मः किमिदमुद्गमादिदोषयुक्तं किं वा नेति, एवमाशङ्काऽऽस्पदीभूतम्, तदित्थम्भूतमसति कल्पनीयनिश्चये 'दितिअ०'—(व्याख्या पूर्ववत्) ॥ ४४ ॥

दगवारेण पिहिअं नीसाए पीढएण वा ।
लोढेण वा वि लेवेण सिलेसेण व केणइ ॥ ४५ ॥

छा० उदककुम्भेन पिहितं, पेषण्या पीठकेन वा ।
शिलापुत्रकेण(लोढेन) वाऽपि लेपेन, श्लेषेण वा केनचित् ॥ ४५ ॥

'घगवारेण०'—'घगवारेग'—उदककुम्भेन पिहितं भाजनस्थं सन्तं स्थगितं, 'नीसाएत्ति'-पेषण्या, पीठकेन वा—पाषाणादिना, 'लोढेण वा'—शिलापुत्रकेण, लेपेन—मृल्लेपादिना, श्लेषेण वा—केनचिज्जतुसम्बन्धिसिक्थादिना ॥ ४५ ॥

तं च उब्भिदिआ दिज्जा समणट्ठाए व दावए ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ४६ ॥
छा० तच्चोद्भिद्य दद्यात्, श्रमणार्थं वा दापयेत् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ४६ ॥

'तं च उब्भिदिआ०'—तच्च स्थगितं लिप्तं वा सद्, उद्भिद्य—उद्घाट्य दद्यात्, च श्रमणाऽर्थमेव दायको नाऽन्याऽ(न्या)र्थम् ॥ ४६ ॥

असणं पाणगं वा वि खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा दाणट्ठा पगडं इमं ॥ ४७ ॥
छा० अशनं पानकं वाऽपि, खाद्यं स्वाद्यं तथा ।
यज्जानीयाच्छृणुयाद्वा, दानार्थं प्रकृतमिदम् ॥ ४७ ॥



१ मधुरिके मधुच्छत्रं सिक्थमित्युच्यते । २ 'दायिका' इति वा ।

'असणं०'—अशनं पानकं वाऽपि खाद्यं स्वाद्यम्',—ओदन-आरनाल-लड्डुक-हरीतक्यादि, यज्जानीयात्—आमन्त्रणादिना, शृणुयाद्वा—अन्यतः, यथा—'दानार्थं प्रकृतमिदम्', दानार्थं प्रकृतं नाम साधुवादनिमित्तं यो ददाति—अव्यापारः पाषण्डिभ्यो देशान्तरादेरागतो वणिक्प्रभृतिरिति ॥ ४७ ॥



तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ४८ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ४८ ॥

'तं भवे०'—तादृशं भक्तपानम् ( शेषं तथैव ) ॥ ४८ ॥

असणं पाणगं वा वि खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा पुण्णट्ठा पगडं इमं ॥ ४९ ॥

छा० अशनं पानकं वाऽपि, खाद्यं स्वाद्यं तथा ।
यज्जानीयाच्छृणुयाद्वा, पुण्यार्थं प्रकृतमिदम् ॥ ४९ ॥



'असणं०'—'पुण्णट्ठ'त्ति—पुण्यार्थं प्रकृतं नामेति—साधुवादाऽनङ्गीकारेण पुण्यार्थमेव ॥ ४९ ॥

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ५० ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ५० ॥

'तं भवे०'—पूर्ववत् ॥ ५० ॥

असणं पाणगं वा वि खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा वणिमट्ठा पगडं इमं ॥ ५१

छा० अशनं पानकं वाऽपि, खाद्यं स्वाद्यं तथा ।
यज्जानीयाच्छृणुयाद्वा, वनीपकार्थं प्रकृतमिदम् ॥ ५१ ॥

'असणं०'—वणिमट्ठ'त्ति—वनीपकाः कृपणास्तदर्थमिति ॥ ५१ ॥



तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ५२ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ५२ ॥

''तं भवे०'–( तारिसं ) पूर्ववत् ॥ ५२ ॥

असणं पाणगं वा वि खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा समणट्ठा पगडं इमं ॥ ५३ ॥

छा० अशनं पानकं वाऽपि, खाद्यं स्वाद्यं तथा ।
यज्जानीयाच्छृणुयाद्वा, श्रमणार्थं प्रकृतमिदम् ॥ ५३ ॥

'असणं०'–'समणट्ठ'त्ति श्रमणाः–निर्ग्रन्थास्तेषामर्थम् ॥ ५३ ॥

अत्राऽऽह–पुण्यार्थप्रकृतपरित्यागे विशिष्टकुलेषु वस्तुतो भिक्षाया अग्रहणमेव, शिष्टानां पुण्याऽर्थमेव पाकप्रवृत्तेः, तथाहि न पितृकर्मादिव्यपोहेनाऽऽत्माऽर्थमेव क्षुद्रसत्त्ववत्प्रवर्तन्ते शिष्टा इति, नैतदेवम्, अभिप्रायाऽपरिज्ञानात्, स्वभोग्यातिरिक्तस्य देयस्यैव पुण्याऽर्थकृतस्य निषेधात्, स्वभृत्य–भोग्यस्य पुनरुचितप्रमाणस्य-इत्वरयदृच्छादेयस्य कुशलप्रणिधानकृतस्याऽप्यनिषेधात्, इति । एतेनाऽदेयदानाऽभावः प्रत्युक्तः, देयस्यैव यदृच्छादानाऽनुपपत्तेः, तथा व्यवहारदर्शनात्, अनीदृशस्यैव प्रतिषेधात्, तदारम्भदोषेण योगात्, यदृच्छादाने तु तद्भावेऽपि आरम्भ-

प्रवृत्तेर्नाऽसौ तदर्थ इत्यारम्भदोषाऽयोगात्, दृश्यते च कदाचित्सूतकादाविव सर्वेभ्य एव प्रदानविकला शिष्टाऽभिमतानामपि पाकप्रवृत्तिरिति, विहिताऽनुष्ठानत्वाच्च तथाविधग्रहणान्न दोष इति ।

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ५४ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ५४ ॥

'तं भवे०'— व्याख्या पूर्ववत् ॥ ५४ ॥

उद्देसिअं कीअगडं पूइकम्मं च आहडं ।
अज्झोअरपामिच्चं मीसजायं च वज्जए ॥ ५५ ॥

छा० औद्देशिकं क्रीतकृतं, पूतिकर्म चाहृतम् ।
अध्यवपूरकं प्रामित्यं, मिश्रजातं च वर्जयेत् ॥ ५५ ॥

'उद्देसिअं०'— उद्दिश्य कृतमौद्देशिकम्—उद्दिष्टकृतकर्मादिभेदम्, क्रीतकृतं—द्रव्यभाव-क्रय-क्रीत-भेदम्, पूतिकर्म—सम्भाव्यमानाऽऽधाकर्माऽवयवसम्मिश्रणलक्षणम्, आहृतं—स्वग्रामाऽऽहृतादि, अध्यवपूरकं—

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ५२ ॥

'तं भवे०'–(तारिसं) पूर्ववत् ॥ ५२ ॥

असणं पाणगं वा वि खाइमं साइमं तहा ।
जं जाणिज्ज सुणिज्जा वा समणट्ठा पगडं इमं ॥ ५३ ॥

छा० अशनं पानकं वाऽपि, खाद्यं स्वाद्यं तथा ।
यज्जानीयाच्छृणुयाद्वा, श्रमणार्थं प्रकृतमिदम् ॥ ५३ ॥

'असणं०'–'समणट्ठ'त्ति श्रमणाः–निर्ग्रन्थास्तेषामर्थम् ॥ ५३ ॥

अत्राऽऽह–पुण्यार्थप्रकृतपरित्यागे विशिष्टकुलेषु वस्तुतो भिक्षाया अग्रहणमेव, शिष्टानां पुण्याऽर्थमेव पाकप्रवृत्तेः, तथाहि न पितृकर्मादिव्यपोहेनाऽऽत्माऽर्थमेव क्षुद्रसत्त्ववत्प्रवर्तन्ते शिष्टा इति, नैतदेवम्, अभिप्रायाऽपरिज्ञानात्, स्वभोग्यातिरिक्तस्य देयस्यैव पुण्याऽर्थकृतस्य निषेधात्, स्वभृत्य–भोग्यस्य पुनरुचितप्रमाणस्य-इत्वरयदृच्छादेयस्य कुशलप्रणिधानकृतस्याऽन्यानिषेधात्, इति । एतेनाऽदेयदानाऽभावः प्रत्युक्तः, देयस्यैव यदृच्छादानाऽनुपपत्तेः, तथा व्यवहारदर्शनात्, अनीदृशस्यैव प्रतिषेधात्, तदारम्भदोषेण योगात्, यदृच्छादाने तु तदभावेऽपि आरम्भ-

'असणं०'—'पुष्फेसु' इत्यादि—पुष्पैर्जातिपाटलाऽऽदिभिर्भवेदुन्मिश्रं, बीजैर्हरितैर्वा [ तृतीयाऽर्थे सप्तमी ] इति ॥ ५७ ॥





तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दितिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ५८ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ५८ ॥

'तं भवे०'—तादृशं भक्तपानं तु संयतानामकल्पिकम्, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति ॥ ५८ ॥

असणं पाणगं वा वि खाइमं साइमं तहा ।
उदगंमि हुज्ज निक्खित्तं उत्तिंगपणगेसु वा ॥ ५९ ॥

छा० अशनं पानकं वाऽपि, खाद्यं स्वाद्यं तथा ।
उदके भवेन्निक्षिप्तम्, उत्तिङ्गपनकेषु वा ॥ ५९ ॥



'असणं०'—अशनं पानकं खाद्यं स्वाद्यं तथा—उदके भवेन्निक्षिप्तम्, उत्तिङ्गपनकेषु वा—कीटिकानगरोली-

स्वार्थमूलाद्रू ग्र(र)हणे प्रक्षेपरूपम्, प्रामित्यं–साध्वर्थमुच्छिद्य दानलक्षणम्, मिश्रजातं च–आदित एव गृहिसंयत-मिश्रोपस्कृतरूपम् ॥ ५५ ॥ संशयव्यपोहायोपायमाह–

उग्गमं से अ पुच्छिज्जा कस्सट्ठा केण वा कडं ।
सुच्चा निस्संकिअं सुद्धं पडिगाहिज्ज संजए ॥ ५६ ॥

छा० उद्गमं तस्य च पृच्छेत्, कस्यार्थं केन वा कृतम् ।
श्रुत्वा निःशङ्कितं शुद्धं, प्रतिगृह्णीयात् संयतः ॥ ५६ ॥

'उग्गमं०'–उद्गमं –तत्प्रसूतिरूपं, से–तस्य शङ्कितस्याऽशनाऽऽदेः पृच्छेत्–'कस्याऽर्थमेतत्, केन वा कृतमेतत्?', श्रुत्वा तद्वचो–न भवदर्थं किन्त्वन्याऽर्थमित्येवम्भूतं, निश्शङ्कितम्–शुद्धं प्रतिगृह्णीयात् संयतः, विपर्ययग्रहणे दोषादिति ॥ ५६ ॥

असणं पाणगं वा वि खाइमं साइमं तहा ।
पुप्फेसु हुज्ज उम्मीसं बीएसु हरिएसु वा ॥ ५७ ॥

छा० अशनं पानकं वाऽपि, खाद्यं स्वाद्यं तथा ।
पुष्पेषु भवेदुन्मिश्रं, बीजेषु हरितेषु वा ॥ ५७ ॥

१ 'अत्र तृतीयार्थे सप्तमी' वृत्तिकारः ।

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ६२ ॥

'तं भवे०'—पूर्ववत् ॥ ६२ ॥

एवं उस्सक्किआ ओसक्किआ उज्जालिआ (पज्जालिआ) निव्वाविआ ।
उस्सिंचिआ निस्सिंचिआ उव्व(ओव)त्तिआ ओआरिआ दए ॥ ६३ ॥

छा० एवमुत्ष्वष्क्यावष्वष्क्य, उज्ज्वाल्य (प्रज्वाल्य) निर्वाप्य ।
उत्सिच्य निषिच्य उद्व(अपव)र्त्य, अवतार्य दद्यात् ॥ ६३ ॥

'एवं उस्सक्किआ०'—यावद् भिक्षां ददामि तावन्माभूद् विध्यास्यती( विध्यासितमि )ति उत्सिच्य दद्यात्, एवम्—'ओसक्किआ'—अवसर्प्य—अतिदाहभयादुल्मुकान् उत्सार्येत्यर्थः, एवम्—'उज्जालिआ, पज्जालिआ'—उज्ज्वाल्य—अर्द्धविध्यातं सकृदिन्धनप्रक्षेपेण, प्रज्वाल्य—पुनः पुनः, एवम्—'निव्वाविआ'—निर्वाप्य दाहभयादेवेति भावः, एवम्—'उस्सिंचिआ'—उत्सिच्य—अतिभृतादुज्झनभयेन, ततो वा दानार्थं तेमनादीनि, 'निस्सिंचिआ'—निषिच्य तद्भाजनाद्दहितं द्रव्यमन्यत्रभाजने तेन दद्यात्, उद्वर्तनभयेन वा द्राहितमुदकेन निषिच्य, एवम्—'ओवत्तिआ ओआरिआ'—अपवर्त्य तेनैव अग्निनिक्षिप्तेन भाजनेन अन्येन वा दद्यात्, तथा अवतार्य दाहभयात्, दानार्थं वा दद्यात्, अत्र तदन्यच्च साधुनिमित्तयोगे न कल्पते ॥ ६३ ॥ इत्याह च—

१ द्राहितं—भाजनस्थं निक्षिप्तमित्यर्थः ।

(ली)१ वेति, "उदगनिक्खित्तं दुविहं—अणंतरं, परंपरं च, अणंतरं—णवणीय-पुग्गलमादि, परंपरं—जलघडोवरि भायणत्थं दधिमादि, एवं उत्तिंगपणएसु"—भावनीयमिति ॥ ५९ ॥

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ६० ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ६० ॥

'तं भवे०'—पूर्ववत् ॥ ६० ॥

असणं पाणगं वा वि खाइमं साइमं तहा ।
तेउम्मि हुज्ज निक्खित्तं तं च संघट्टिआ दए ॥ ६१ ॥

छा० अशनं पानकं वाऽपि, खाद्यं स्वाद्यं तथा ।
तेजसि भवेन्निक्षिप्तं, तच्च सङ्घट्ट्य दद्यात् ॥ ६१ ॥

'असणं०'—'तेउम्मि' इत्यादि—तेजस्यग्नौ निक्षिप्तं (भवेत्) तच्च संघट्ट्य दद्यात् ॥ ६१ ॥

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ६२ ॥

'न तेण०'—न तेन काष्ठादिना भिक्षुर्गच्छेत्, दृष्टस्तत्राऽसंयमः, तच्चलने प्राण्युपमर्दसम्भवात्, तथा गम्भीरमप्रकाशम्, शुषिरं चैवमन्तःसाररहितम्, सर्वेन्द्रियसमाहितः ॥ ६६ ॥

निस्सेणिं फलगं पीढं ऊसवित्ताणमारुहे ।
मंचं कीलं च पासायं समणट्ठा एव दावए ॥ ६७ ॥

छा० निश्रेणिं फलकं पीठम्, उत्सृत्याऽऽरोहेत् ।
मञ्चं कीलकं च प्रासादं, श्रमणार्थमेव दायकः(यिका) ॥ ६७ ॥

'निस्सेणिं०'—निश्रेणीं फलकं पीठम्, 'ऊसवित्ताण'—उच्छ्रित्य—ऊर्ध्वंकृत्य(त्वा) इत्यर्थः, आरोहेन्मञ्चं कीलं च उच्छ्रित्य, कमारोहेदित्याह—प्रासादं श्रमणाऽर्थं—साधुनिमित्तं दायकः—दाता ॥ ६७ ॥ अत्रैव दोषमाह—

दुरूहमाणी पवडिज्जा हत्थं पायं व लूसए ।
पुढवीजीवे वि हिंसिज्जा जे अ तण्णिस्सिआ जगा(गे) ॥ ६८ ॥

छा० दूरोहन्ती प्रपतेत्, हस्तं पादं वा लूषयेत् ।
पृथ्वीजीवानपि हिंस्यात्, ये (यानि) च तन्निश्रिता(नि) जगति(न्ति) ॥ ६८ ॥

'दुरूहमाणी०'—आरोहन्ती प्रपतेत्, प्रपतन्ती च हस्तं पादं वा लूषयेत्, स्वकं स्वत एव खण्डयेत्, तथा पृथिवीजीवान् विहिंस्यात् कथञ्चित्तत्स्थान्, तथा यानि च तन्निश्रितानि जगन्ति—प्राणिनश्च (तान्) हिंस्यात् ॥ ६८ ॥

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ६४ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ६४ ॥

'तं भवे०'–पूर्ववत् ॥ ६४ ॥ गोचराऽधिकार एव गोचरप्रविष्टस्य यद् भवेत् तदाऽऽह–

हुज्ज कट्ठं सिलं वा वि इट्टालं वा वि एगया ।
ठविअं संकमट्ठाए तं च हुज्ज चलाचलं ॥ ६५ ॥

छा० भवेत्काष्ठं शिला वाऽपि, इष्टिका वाऽप्येकदा ।
स्थापितं संक्रमार्थाय, तच्च भवेच्चलाऽचलम् ॥ ६५ ॥

'हुज्ज०'–भवेत् काष्ठ, शिला वाऽपि, इट्टाल वाऽप्येकदा–एकस्मिन् काले प्रावृडादौ स्थापितं संक्रमाऽर्थं, तच्च भवेच्चलाऽचलमप्रतिष्ठितम् ॥ ६५ ॥

न तेण भिक्खू गच्छिज्जा दिट्ठो तत्थ असंजमो ।
गंभीरं झुसिरं चेव सव्विंदिअसमाहिए ॥ ६६ ॥

छा० न तेन भिक्षुर्गच्छेत, दृष्टस्तत्राऽसंयमः ।
गम्भीरं शुषिरं चैव, सर्वेन्द्रियसमाहितः ॥ ६६ ॥

छा० तथैव सक्तुचूर्णानि, कोलचूर्णान्यापणे ।
शष्कुलिं फाणितमपूपम्, अन्यद्वाऽपि तथाविधम् ॥ ७१ ॥

'तहेव'०—तथैव सक्तुचूर्णान्—सक्तून्, कोलचूर्णान्—बदरचूर्णान्, आपणे—वीथ्यां, शष्कुलीं—तिलपर्पटिकां, फाणितं— द्रवगुडं, पूपं—कणिकादिमयम्, अन्यद्वा तथाविधं मोदकादि ॥ ७१ ॥



विक्कायमाणं पसढं रएण परिफासिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ७२ ॥
छा० विक्रीयमाणं प्रसढं (प्रसह्यं), रजसा परिस्पृष्टम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ७२ ॥

'विक्कायमाणं०'—विक्रीयमाणम् आपण इति वर्तते, प्रसह्यम्-अनेकदिवसस्थापनेन प्रकटम्, अत एव रजसा पार्थिवेन परिस्पृष्टं तदित्थम्भूतं, तत्र ददतीं प्रत्याचक्षीत न मम कल्पते तादृशम् ॥ ७२ ॥

बहुअट्ठिअं पुग्गलं अणिमिसं वा बहुकंटयं ।
अत्थिअं तिंदुअं बिल्लं इच्छुखंडं व सं(सिं)बलिं ॥ ७३ ॥



---

१ प्रकटार्थमिदं पदम् ।

एआरिसे महादोसे जाणिऊण महेसिणो ।
तम्हा मालोहडं भिक्खं न पडिगिण्हंति संजया ॥ ६९ ॥
छा० एतादृशान्महादोषान्, ज्ञात्वा महर्षयः ।
तस्मान्मालापहृतां भिक्षां, न प्रतिगृह्णन्ति संयताः ॥ ६९ ॥

'एआरिसे०'–ईदृशान् अनन्तरोदितान् महादोषान् ज्ञात्वा महर्षयो यस्माद्दोषकारिणीयं तस्मान्मालाऽपहृतां–मालादानीता भिक्षा न प्रतिगृह्णन्ति संयताः, पाठान्तरं वा–'हंदि मालोहड'ति–मालाऽपहृतामिति, हंदीत्युपप्रदर्शने ॥ ६९ ॥ प्रतिषेधाऽधिकार एवाऽऽह–

कंदं मूलं पलंबं वा आमं छिण्णं व सण्णिरं ।
तुंबागं सिंगवेरं च आमगं परिवज्जए ॥ ७० ॥
छा० कन्दं मूलं प्रलम्बं वा, आमं छिन्नं वा सन्निरम् ।
तुम्बाकं शृङ्गवेरं च, आमकं परिवर्जयेत् ॥ ७० ॥

'कंदं०'–कन्दं–सूरणाऽऽदिलक्षणं, मूलं–विदारिकारूपं, प्रलम्बं वा–तालफलादि, आमं छिन्नं वा सन्निरं–संनिरमिति पत्रशाकं, तुम्बाकम्–त्वङ्मज्जान्तर्वर्ति-आर्द्रं वा तुलसीमित्यन्ये, शृङ्गवेरम्–आर्द्रकम्, आमं परिवर्जयेत् ॥७०॥

तहेव सत्तुचुण्णाइं कोलचुण्णाइं आवणे ।
सक्कुलिं फाणिअं पूअं अण्णं वा वि तहाविहं ॥ ७१ ॥

अप्पे सिआ भोअणजाए बहुउज्झिअधम्मिए ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ७४ ॥

छा० अल्पं स्याद्भोजनजातं, बहूज्झनधर्मकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ७४ ॥

'अप्पे०'—अल्पं स्याद् भोजनजातमत्र, बहूज्झनधर्मकमेतत्, यतश्चैवम् अतो ददतीं प्रत्याचक्षीत न मे कल्पते तादृशमिति ॥ ७४ ॥ उक्तोऽशनविधिः, साम्प्रतं पानविधिमाह—

तहेवुच्चावयं पाणं अदुवा वारधोअणं ।
संसेइमं चाउलोदगं अहुणाधोअं विवज्जए ॥ ७५ ॥

छा० तथैवोच्चाऽवचं पानम्, अथवा घट(वारक)धावनम् ।
संस्वेदिमं(दजं) तण्डुलोदकम्, अधुनाधौतं विवर्जयेत् ॥ ७५ ॥

'तहेवु०'—तथैव यथाऽशनमुच्चावचं, पानं चोच्चं वर्णाद्युपेतम्, अवचं वर्णादिहीनम्, अथवा वारक-धावनं—गुड-घट-धावनादि, संस्वेदजं पिष्टोदकादि, तण्डुलोदकं च अधुनाधौतमपरिणतं विवर्जयेदिति ॥ ७५ ॥ अत्रैव विधिमाह—

छा० बह्वस्थिकं पुद्गलम्, अनिमिषं वा बहुकण्टकम् ।
अस्थिकं तिन्दुकं बिल्वम्, इक्षुखण्डं वा शाल्मलिम् ॥ ७३ ॥

' बहुअट्ठिअं० '—बह्वस्थिपुद्गलं-मांसम्, अनिमिषं वा-मत्स्यं वा बहुकण्टकम्, अयं किल कालाद्यपेक्षया ग्रहणे प्रतिषेधः । अन्ये त्वभिदधति— " वनस्पत्यधिकारात् तथाविधफलाऽभिधाने-एते इति ", तथा चाह—अच्छिकम्-अच्छिकवृक्षफलम्, तैन्दुकं-तेन्दुरुकीफलम्, बिल्वम् इक्षुखण्डमिति च प्रतीते, शाल्मलीं वा—वल्लादिफलं वा, 'वा'शब्दस्य व्यवहितः सम्बन्धः ॥ ७३ ॥ अत्रैव दोषमाह—

---

( १ ) अत्राऽयं विशेषविमर्शः—पुद्गलाऽनिमिषशब्दयोरन्यार्थयोरपि बह्वस्थिकबहुकण्टक-विशेषणे मत्स्यमांसयोः शक्तिं माहयतः, किन्तु प्राणिघातपातकात्सुदूरं गतस्याऽऽर्हताऽऽगमस्य संयताऽशने मत्स्यमांससंनिवेशो ब्रह्मचारिणो वेश्याऽभिनिवेश इव श्रोत्रियस्य चाण्डालाऽऽलिङ्गनमिव नितरामान्तरमुद्वेजयति, तस्मात् त्रिभिः करणैर्योगैश्च जिघांसां परिहरत आर्हतस्य मुनेः—

" नाऽकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् । संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः " ॥ १ ॥

इत्यादीनि मानवान्यपि वचनानि स्मृतिपथादपयास्यन्तीति न प्रतीतिर्बलवती, तस्मात्प्रक्षिप्तेयं गाथेति बलवदभिज्ञानम् ।

अथ मूलस्थेयं गाथा तत्रत्यनिषेध्यानामितरथा निषेधाऽसम्भवात्, अत्रपक्षेऽपि समाचक्षते विचक्षणाः—" अत्र ' पुग्गलं ' ' अणिमिसं ' इति सविशेषणं पदद्वयं तथोपन्यस्तं यथा च प्रकरणमिदं सन्दिग्धमभूत्, पक्षद्वयसूचनया च वृत्तिकारैरपि काऽपि निर्णीतिर्न प्रत्ता, प्रकरणमिदमादाय धीधनैरिदानीन्तनैर्जैनाऽऽगमस्थमात्रं पुद्गलादिपदं फलार्थकमेवेति सप्रमाणं निर्णीतम्, अत एव विशदं निर्जिगीषुभिर्विषयेऽत्र उपाध्यायमुनिभिः शतावधानिमुनिभिश्च प्रणीतनिबन्धतोऽधिकमवसेयम् । किन्तु बहुषु स्थलेषु निरुक्तं पदं मत्स्यमांसार्थकतयैव वृत्तिकारैरङ्गीकृतम्, अतश्च मानसं संशेतेऽनुमिनोति च यत्सौगतसाहित्यप्रत्यासत्त्याऽऽर्हतसाहित्येऽपि जनरुचिमनुसृत्य तच्छाया पतिता किन्तु नितरामहिंसके जैनागमेऽधुना सा शोभां नासादयतीति॥

थोवमासायणट्ठाए हत्थगम्मि दलाहि मे ।
मा मे अच्चंबिलं पूइं नालं तिण्हं विणित्तए ॥ ७८ ॥

छा० स्तोकमास्वादनार्थं, हस्तके देहि मे ।
मा मे अत्यम्लं पूति, नाऽलं तृष्णां विनेतुम् ॥ ७८ ॥

'थोवमा०'—स्तोकमास्वादनाऽर्थं प्रथमं तावद्धस्ते देहि मे, यदि साधुप्रायोग्यं ततो ग्रहीष्ये, मा मेऽत्यम्लं पूति नाऽलं तृटपनोदाय, ततः किमनेनाऽनुपयोगिनेति ॥ ७८ ॥

तं च अच्चंबिलं पूइं नालं तिण्हं विणित्तए ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ७९ ॥

छा० तच्चाऽत्यम्लं पूति, नाऽलं तृष्णां विनेतुम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ७९ ॥

'त च०'—तच्च अत्यम्लं पूति नाऽलं—न समर्थं तृडपनोदाय ॥ ७९ ॥

तं च हुज्ज अकामेणं विमणेण पडिच्छिअं ।
तं अप्पणा न पिबे णो वि अण्णस्स दावए ॥ ८० ॥

जं जाणिज्ज चिराधोअं मइए दंसणेण वा ।
पडिपुच्छिऊण सुच्चा वा जं च निस्संकिअं भवे ॥ ७६ ॥

छा० यज्जानीयाच्चिरधौतं, मत्या दर्शनेन वा ।
परिपृच्छय श्रुत्वा वा, यच्च निःशङ्कितं भवेत् ॥ ७६ ॥

'जं जाणिज्ज०'—यत्तण्डुलोदकं जानीयात्—विद्याच्चिरधौतं मत्या दर्शनेन वा, पृष्ट्वा गृहस्थं श्रुत्वा च प्रतिवचः, यच्च निश्शङ्कितं भवेत् तद् गृह्णीयादिति शेषः (एषाऽवशिष्टा व्याख्या प्रत्यन्तरतः).॥ ७६ ॥ उष्णोदकादिविधिमाह—

अजीवं परिणयं नच्चा पडिगाहिज्ज संजए ।
अह संकिअं भविज्जा आसाइत्ताण रोअए ॥ ७७ ॥

छा० अजीवं परिणतं ज्ञात्वा, प्रतिगृह्णीयात् संयतः ।
अथ शङ्कितं भवेत्, आस्वाद्य रोचयेत् ॥ ७७ ॥

'अजीवं० '—उष्णोदकमजीवपरिणतं ज्ञात्वा त्रिदण्डपरिवर्तनादिरूपं, मत्या दर्शनेन चेत्यादि वर्तते, तदित्थम्भूतं प्रतिगृह्णीयात्संयतः, चतुर्थरसमपि अपूत्यादि देहोपकारकं मत्यादिना ज्ञात्वा इति, अथ शङ्कितं भवेत् पूत्यादिभावेन, तत आस्वाद्य रोचयेत्, विनिश्चयं कुर्यात ॥ ७७ ॥

थोवमासायणट्ठाए हत्थगम्मि दलाहि मे ।
मा मे अच्चंबिलं पूइं नालं तिण्हं विणित्तए ॥ ७८ ॥

छा० स्तोकमास्वादनार्थं, हस्तके देहि मे ।
मा मे अत्यम्लं पूति, नाऽलं तृष्णां विनेतुम् ॥ ७८ ॥

'थोवमा०'—स्तोकमास्वादनार्थं प्रथमं तावद्धस्ते देहि मे, यदि साधुप्रायोग्यं ततो ग्रहीष्ये, मा मेऽत्यम्लं पूति नाऽलं तृडपनोदाय, ततः किमनेनाऽनुपयोगिनेति ॥ ७८ ॥

तं च अच्चंबिलं पूइं नालं तिण्हं विणित्तए ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ ७९ ॥

छा० तच्चाऽत्यम्लं पूति, नाऽलं तृष्णां विनेतुम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ ७९ ॥

'तं च०'—तच्च अत्यम्लं पूति नाऽलं—न समर्थं तृडपनोदाय ॥ ७९ ॥



तं च हुज्ज अकामेणं विमणेण पडिच्छिअं ।
तं अप्पणा न पिबे णो वि अण्णस्स दावए ॥ ८० ॥

छा० तच्च भवेदकामेन, विमनसा प्रतीच्छितम् ।
तदाऽऽत्मना न पिबेत्, नोऽप्यन्यस्मै दापयेत् ॥ ८० ॥

'तं च हुज्ज०'–तच्च अत्यम्लादि भवेदकामेन–उपरोधशीलतया, विमनस्केन–अन्यचित्तेन, प्रतीप्सितं–गृहीतं, तदाऽऽत्मनः कायाऽपकारकमिति अनाभोगधर्मश्रद्धया न पिबेत्, नाऽप्यन्येभ्यो दापयेत्, रत्नाधिकेनाऽपि स्वयं दानस्य प्रतिषेधज्ञापनार्थं दापनग्रहणम्, आह च–"सव्वत्थ संजमं संजमाउ अप्पाणमेव" इत्यादि भावनयेति ॥ ८० ॥ तर्हि किं कार्यम् ? इति तद्विधिमाह—

एगंतमवक्कमित्ता अचित्तं पडिलेहिआ ।
जयं परिट्ठविज्जा परिट्ठप्प पडिक्कमे ॥ ८१ ॥

छा० एकान्तमवक्रम्य, अचित्तं प्रतिलेख्य ।
यतं परिष्ठापयेत्, परिष्ठाप्य प्रतिक्रामेत् ॥ ८१ ॥

'एगंत०'–एकान्तमवक्रम्य–गत्वा, अचित्तं–दग्धदेशादि प्रत्युपेक्ष्य चक्षुषा, प्रमृज्य रजोहरणेन, स्थण्डिल-मिति गम्यते, यतम्–अत्वरितं प्रतिष्ठापयेत्, विधिना–त्रिर्वाक्यपूर्वं[1] व्युत्सृजेत्, प्रतिष्ठाप्य वसतिमागतः प्रतिक्रामेत्,



१ त्रिवारं व्युत्सृजामीति पठित्वेत्यर्थः ।

ईर्य्याविधिकाम्(कीम्), एतच्च बहिरागतनियमकरणसिद्धं प्रातिक्रमणम्, अन्यहिरपि प्रतिष्ठाप्य प्रतिक्रमण–नियमज्ञापनार्थमिति ॥ ८१ ॥ एवमन्नपानग्रहणविधिमभिधाय भोजनविधिमाह–

सिआ य गोअरग्गगओ इच्छिज्जा परिभुत्तुअं ।
कुट्ठगं भित्तिमूलं वा, पडिलेहित्ताण फासुअं ॥ ८२ ॥
छा० स्याच्च गोचराग्रगतः, इच्छेत् परिभोक्तुम् ।
कोष्ठकं भित्तिमूलं वा, प्रतिलेख्य प्रासुकम् ॥ ८२ ॥

'सिआ य गोअर०'–स्यात्कदाचित्, गोचराऽग्रगतो ग्रामान्तरं(रे) भिक्षां प्रविष्ट इच्छेत् परिभोक्तुं जलादिपिपासाद्यभिभूतः, तत्र साधुर्वसत्यभावे कोष्ठकं–शून्य-चट्ट-मठादि, भित्तिमूलं वा–कुड्यैकदेशाऽऽदि, प्रत्युपेक्ष्य चक्षुषा, प्रमृज्य रजोहरणेन, प्रासुकं–बीजादिरहितम् ॥ ८२ ॥ तत्र—

अणुण्णवित्तु मेहावी पडिच्छण्णम्मि संवुडे ।
हत्थगं संपमज्जित्ता तत्थ भुंजिज्ज संजए ॥ ८३ ॥
छा० अनुज्ञाप्य मेधावी, प्रतिच्छन्ने संवृतः ।
हस्तकं सम्प्रमार्ज्य, तत्र भुञ्जीत संयतः ॥ ८३ ॥



---

१ प्रद्विपक्षे.

'अणुण्णवित्तु०'–अनुज्ञाप्य सागारिक–परिहारतो विश्रमणव्याजेन तत्स्वामिनमवग्रहं, मेधावी-साधुः, प्रतिच्छन्ने–तत्र कोष्ठकादौ संवृतः–उपयुक्तः सन् साधुः-ईर्याप्रतिक्रमणं कृत्वा तदनु हस्तकं–मुखवस्त्रिकारूपमादायेति वाक्यशेषः, संप्रमृज्य विधिना कायं तेन तत्र भुंञ्जीत संयतः ॥ ८३ ॥



१ अत्र 'हत्थगं' इति पदं विवृण्वन्तो विवृत्तिकारा एवमाहु:–"हस्तकं–मुखवस्त्रिका, तं गृहीत्वा तेन हस्तकेन देहं प्रमार्ज्य साधुर्भुञ्जीत इति", अत्र 'हत्थगं संपमज्जित्ता' अस्य सरलमर्थं 'हस्ताद्यङ्गं प्रमार्ज्य' इत्यकृत्वा हस्तकं मुखवस्त्रिका तदादाय तेन अङ्गप्रमार्जनविधानं निजसम्प्रदायस्य दुर्निग्रहमाग्रहं ग्राहयति। शब्दस्य दीर्घदीर्घतरव्यापारमप्यभिव्यञ्जयति च। कियन्तो मान्याः सन्तः 'हत्थग', इति पदेन रजोहरणी पुञ्जिकेति अर्थमकार्षुः, किन्तु सोऽर्थोऽपि 'हस्ते भवो हस्तकः' इति व्युत्पत्तिनिमित्तकः स्यात्, परन्तु सा व्युत्पत्तिरपि शब्दानुशासनशून्या, उचिता व्युत्पत्तिस्तु 'हस्ते गच्छतीति हस्तगः', अथवा 'हस्त एव हस्तकः' तत्र, उपलक्षणत्वादवयवान्तराणामपि ग्रहणम्, ततश्च सिद्ध्यत्ययमर्थो यत्–'हस्ताद्यङ्गं प्रमार्ज्य भुञ्जीत', अमुमेवाऽर्थं सूत्रान्तरमपि संवदति, तथा च–प्रश्नव्याकरणे प्रथमसंवराध्ययने चतुर्थभावनायां भोजनविधौ–"ससीसं कायं" इत्युक्तेऽपि "तहाकरतलं" इति पदेन हस्ततलस्य पृथग्ग्रहणं कृतं विशिष्यप्रमार्जनीयत्वादस्य, प्रस्तुते 'हस्तग' इत्युक्तौ रजोहरणीत्यर्थो भविष्यति 'हस्तकं' इत्युक्तौ हस्तः करतलं गृह्यते, उपलक्षणत्वाद् इतरेऽवयवा अपि गृहीता भवन्ति, प्रमार्जनीं विना प्रमार्जनक्रियाया अनुपपत्तेर्भवति तस्यास्तयाऽऽक्षेपः। एवं प्रमार्जनीकरतलरूपावुभावप्यर्थौ भवतः सामञ्जस्योपेतौ, तथापि वृत्तिकृता यत् 'हस्तकं' इतिपदस्य मुखवस्त्रिकारूपोऽर्थो विहितः, तन्न समीचीनम्, प्रमार्जनक्रियायां मुखवस्त्रिकाया असाधकतमत्वात्। अस्मिन्नेवाऽध्ययनेऽष्टसप्ततितमायां गाथायामपि 'हत्थगंमि दलाहि मे' अत्र सप्तम्यन्तहस्तकपदस्य 'हस्तकः'–हस्त एवार्थः सर्वसम्मतो वृत्तिकारेणाऽप्यङ्गीकृतः, तस्यैव 'हत्थग'पदस्य मुखवस्त्रिकारूपोऽर्थः तेनैव वृत्तिकृता क्रियते इति 'इयमर्थप्रणाली व्याख्याबुद्धिबलाऽपेक्षा' इति कृत्वाऽऽगममाक्षेपार्हं कुरुते, अधिकं सुधीभिः स्वयमुह्यम्।

तत्थ से भुंजमाणस्स अट्ठिअं कंटओ सिआ।
तणकट्ठसक्करं वा वि अण्णं वा वि तहाविहं ॥ ८४ ॥

छा० तत्र तस्य भुञ्जानस्य, अस्थिकं कण्टकः स्यात्।
तृणकाष्ठशर्करा वाऽपि, अन्यद्वाऽपि तथाविधम् ॥ ८४ ॥

'तत्थ से०'—तत्र से—तस्य साधोर्भुञ्जानस्य अस्थि कण्टको वा स्यात्, कथञ्चिद्गृहिणां प्रमाददोषात्, कारणगृहीते पुद्गल एवेत्यन्ये, तृण—काष्ठ—शर्करादि वाऽपि स्यात्, उचितभोजनेऽन्यद्वाऽपि तथाविधं बदरकण्टकादि ॥ ८४ ॥

तं उक्खिवित्तु न निक्खिवे, आसएण न छड्डुए।
हत्थेण तं गहेऊणं एगंतमवक्कमे ॥ ८५ ॥

छा० तदुत्क्षिप्य न निक्षिपेत्, आस्येन न छर्दयेत्।
हस्तेन तद्गृहीत्वा, एकान्तमवक्रामेत् ॥ ८५ ॥

'तं उक्खिवित्तु०'—तदस्थ्यादि एकान्तमवक्रामेत् ॥ ८५ ॥

एगंतमवक्कमित्ता अचित्तं पडिलेहिआ।
जयं परिट्ठविज्जा परिट्ठप्प पडिक्कमे ॥ ८६ ॥



१ कर्कटादि, इति पाठान्तरम्।

छा० एकान्तमवक्रम्य, अचित्तं प्रतिलेख्य।
यतं परिष्ठापयेत्, परिष्ठाप्य प्रतिक्रामेत् ॥ ८६ ॥

'एगंत०'—व्याख्यातमेव ॥ ८६ ॥ वसतिमधिकृत्य भोजनविधिमाह—

सिआ य भिक्खू इच्छिज्जा सिज्जमागम्म भुत्तुअं।
सपिंडपायमागम्म उंडुअं पडिलेहिआ ॥ ८७ ॥

छा० स्याच्च भिक्षुरिच्छेत्, शय्यामागम्य भोक्तुम्।
सपिण्डपात्रमागम्य, उन्दुकं प्रतिलेख्य ॥ ८७ ॥

'सिआ य०'—स्यात्कदाचित् तदन्यकारणाऽभावे सति भिक्षुरिच्छेत्—शय्यां—वसतिमागम्य परिभोक्तुम्, तत्राऽयं विधिः—सह पिण्डपातेन—विशुद्धसमुदानेनागम्य, वसतिमिति गम्यते। तत्र बहिरेव उन्दुकं—स्थानं प्रत्युपेक्ष्य विधिना तत्रस्थः पिण्डपातं विशोधयेत् ॥ ८७ ॥ तत ऊर्द्ध्वं किं कुर्यादित्याह—

विणएणं पविसित्ता सगासे गुरुणो मुणी।
इरियावहियमायाय आगओ अ पडिक्कमे ॥ ८८ ॥

छा० विनयेन प्रविश्य, सकाशे गुरोर्मुनिः।
ईर्यापथिकीमादाय, आगतश्च प्रतिक्रामेत् ॥ ८८ ॥



---

१ उन्दुकं—स्थानमित्यर्थः।

'विणएणं०'–विशोध्य पिण्डं बहिः, विनयेन नैषेधिकीं 'नमः क्षमाश्रमणेभ्योऽञ्जलिकरणलक्षणेन', प्रविश्य, वसतिमिति गम्यते । सकारो गुरोर्मुनिः–गुरुसमीपे इत्यर्थः, ईर्यापथिकीमादाय–' इच्छामि पडिक्कमिउं इरियावहिआए ' इत्यादि सूत्रं पठित्वा, आगतश्च गुरुसमीपं प्रतिक्रामेत्–कायोत्सर्गं कुर्यात् ॥ ८८ ॥ ततश्च—

आभोइत्ताण नीसेसं अइआरं ( च ) जहक्कमं ।
गमणागमणे चेव भत्तपाणे व संजए ॥ ८९ ॥

छा० आभोगयित्वा निश्शेषम्, अतिचारं यथाक्रमम् ।
गमनागमने चैव, भक्तपाने वा संयतः ॥ ८९ ॥

'आभोइत्ताण०'–तत्र कायोत्सर्गे आभोगयित्वा–ज्ञात्वा निःशेषमतिचारं यथाक्रमं, क्वेत्याह–गमनागमनयोश्चैव योऽतिचारः, (तथा) भक्तपानयोश्च योऽतिचारः, तं संयतः–कायोत्सर्गस्थो हृदये स्थापयेत् ॥ ८९ ॥

विधिनोत्सारिते च तस्मिन्–

उज्जुप्पण्णो अणुव्विग्गो अव्वक्खित्तेण चेअसा ।
आलोए गुरुसगासे जं जहा गहिअं भवे ॥ ९० ॥

छा० ऋजुप्रज्ञोऽनुद्विग्नः, अव्याक्षिप्तेन चेतसा ।
आलोचयेद्गुरुसकाशे, यद्यथा गृहीतं भवेत् ॥ ९० ॥

१ नामधातु.

'उज्जुप्पण्णो०'—ऋजुप्रज्ञः—अकुटिलमतिः, सर्वत्राऽनुद्विग्नः—क्षुधादिजयात्प्रशान्तः, अव्याक्षिप्तेन चेतसा आलोचयेद् गुरुसकाशे, यद्यथा गृहीतं भवेत् ॥ ९० ॥

न सम्ममालोइअं हुज्जा पुव्विं पच्छा व जं कडं ।
पुणो पडिक्कमे तस्स वोसिट्ठो चिंतए इमं ॥ ९१ ॥

छा० न सम्यगालोचितं भवेत्, पूर्वं पश्चाद्वा यत्कृतम् ।
पुनः प्रतिक्रामेत्तस्य, व्युत्सृष्टश्चिन्तयेदिदम् ॥ ९१ ॥

'न सम्म०'—न सम्यगालोचितं भवेत् सूक्ष्ममज्ञानात्—अनाभोगेनाऽननुस्मरणाद्वा । पूर्वं पश्चाद्वा यत्कृतं—पुरःकर्म पश्चात्कर्म वेत्यर्थः । पुनरालोचनानन्तरं प्रतिक्रामेत्तस्य सूक्ष्माऽतिचारस्य 'इच्छामि पडिक्कमिउं गोअरचरिआए' इत्यादि पठित्वा, व्युत्सृष्टः—कायोत्सर्गस्थश्चिन्तयेदिदं वक्ष्यमाणम् ॥ ९१ ॥

अहो जिणेहिं असावज्जा वित्ती साहूण देसिआ ।
मुक्खसाहणहेउस्स साहुदेहस्स धारणा ॥ ९२ ॥

छा० अहो जिनैरसावद्या, वृत्तिः साधूनां देशिता ।
मोक्षसाधनहेतवे, साधुदेहस्य धारणा(य) ॥ ९२ ॥

'अहो जिणेहिं०'—अहो विस्मये, जिनैरसावद्या—अपापा वृत्तिः साधूनां दर्शिता (देशिता वा), मोक्ष-साधनहेतोः—सम्यग्दर्शनादिहेतोः—सम्यग्दर्शन-ज्ञान-चारित्र-साधनस्य साधुदेहस्य धारणाय—सन्धारणार्थम् ॥९२॥

नमुक्कारेण पारित्ता करित्ता जिणसंथवं ।
सज्झायं पट्ठवित्ताणं वीसमिज्ज खणं मुणी ॥ ९३ ॥
छा० नमस्कारेण पारयित्वा, कृत्वा जिनसंस्तवम् ।
स्वाध्यायं प्रस्थाप्य, विश्राम्येत्क्षणं मुनिः ॥ ९३ ॥

'नमुक्कारेण०'—नमस्कारेण पारयित्वा 'नमो अरिहंताणं' इत्यनेन, कृत्वा जिनसंस्तवं 'लोगस्स उज्जोअगरे' इत्यादिरूपम् । ततो यदि न पूर्वं प्रस्थापितः, ततः स्वाध्यायं प्रस्थाप्य मण्डल्युपजीवकस्तमेव कुर्यात्, यावदन्ये आगच्छन्ति, यः पुनस्तदन्यः क्षपकादिः सोऽपि प्रस्थाप्य विश्राम्येत् क्षणं—स्तोककालं मुनिरिति ॥ ९३ ॥

वीसमंतो इमं चिंते हिअमट्ठं लाभमट्ठिओ ।
जइ मे अणुग्गहं कुज्जा साहू हुज्जामि तारिओ ॥ ९४ ॥
छा० विश्राम्यन्निमं चिन्तयेत्, हितमर्थं लाभार्थिकः ।
यदि मेऽनुग्रहं कुर्यात्, साधुर्भवामि तारितः ॥ ९४ ॥

'वीसमंतो०'—विश्राम्यन्निमं चिन्तयेत्—हितं—कल्याणप्रापकमर्थं वक्ष्यमाणम्, किंविशिष्टः सन्? भावलाभेन निर्जरादिनाऽर्थोऽस्येति लाभार्थिकः, यदि मे—ममाऽनुग्रहं कुर्युः साधवः प्रासुकपिण्डग्रहणेन ततः स्यामहं तारितो भवसमुद्रात् ॥ ९४ ॥

एवं सञ्चिन्त्योचितवेलायामाचार्यमामन्त्रयेत्, यदि गृह्णाति शोभनम्, नो चेद्वक्तव्योऽसौ—भगवन्! देहि केभ्योऽप्यतो यद्दातव्यम्, ततो यदि ददाति तदा सुन्दरम्, अथ भणति—त्वमेव प्रयच्छ, अत्रान्तरे—

साहवो तो चिअत्तेणं निमंतिज्ज जहक्कमं ।
जइ तत्थ केइ इच्छिज्जा तेहिं सद्धिं तु भुंजए ॥ ९५ ॥

छा० साधूंस्ततः प्रीतेन, निमन्त्रयेद्यथाक्रमम् ।
यदि तत्र केचिदिच्छेयुः, तैः सार्धं तु भुञ्जीत ॥ ९५ ॥

'साहवो०'—साधूंस्ततो गुर्वनुज्ञातः सन्, 'चियत्तेणंति'—मनःप्रणिधानेन निमन्त्रयेत्, यथाक्रमं—यथा रत्नाधिकतया, ग्रहणौचित्यापेक्षया बालादिक्रमेण इत्यन्ये । यदि तत्र केचन धर्मबान्धवा इच्छेयुः, ततस्तैः सार्द्धं भुञ्जीत, उचितसंविभागदानेन इति ॥ ९५ ॥

अह कोइ न इच्छिज्जा तओ भुंजिज्ज एगओ ।
आलोए भायणे साहू जयं अपरिसाडिअं ॥ ९६ ॥

छा० अथ कोऽपि नेच्छेत्, ततो भुञ्जीतैककः ।
आलोके भाजने साधुः, यतमपरिशाटयन् ॥ ९६ ॥

' अह कोइ० '—अथ कश्चिन्नेच्छेत्, ततो भुञ्जीत एककः—रागादिरहितः, कथं भुञ्जीतेत्यत्राह—आलोके भाजने-मक्षिकाद्यपोहाय प्रकाशप्रधानभाजने इत्यर्थः, साधुर्यतं-प्रयत्नेन तत्रोपयुक्तोऽपरिशाटयन्—हस्तमुखाभ्यामनुज्झ(मन्नीव)न् ॥ ९६ ॥ भोग्यमधिकृत्य विशेषमाह—

तित्तगं व कडुअं व कसायं, अंबिलं व महुरं लवणं वा ।
एअलद्धमण्णट्ठपउत्तं महुघयं व भुंजिज्ज संजए ॥ ९७ ॥

छा० तिक्तकं वा कटुकं वा कषायम्, अम्लं वा मधुरं लवणं वा ।
एतल्लब्धमन्यार्थप्रयुक्तम्, मधुघृतमिव भुञ्जीत संयतः ॥ ९७ ॥

' तित्तगं० '—तिक्तकं वा—एलुकवालुकादि, कटुकं वा—आर्द्रक-तीमनादि, कषायं—वल्लादि, आम्लं—तक्राऽऽरनालादि, मधुरं-क्षीरमध्वादि, लवणं वा-प्रकृतिक्षारं-तथाविधं शाकादि, एतत्तिक्तादि लब्धमागमोक्तविधिना प्राप्तम् । अन्यार्थमक्षोपाङ्गन्यायेन परमार्थतो मोक्षार्थं प्रयुक्तं, तत्साधकमिति कृत्वा मधुघृतमिव भुञ्जीत (संयतः), न वर्णाद्यर्थम् । अथवा मधुघृतमिव ' णो वामाओ हणुआओ दाहिणं हणुअं संचारिज्जात्ति ' ॥ ९७ ॥

अरसं विरसं वा वि सूइअं वा असूइअं ।
उल्लं वा जइ वा सुक्कं मंथुकुम्मासभोअणं ॥ ९८ ॥



---

१ परिशाटितमिति मूलानुगतम् ।

छा० अरसं विरसं वाऽपि, सूचितं वाऽसूचितम् ।
आर्द्रं वा यदि वा शुष्कं, मन्थुकुलमापभोजनम् ॥ ९८ ॥

'अरसं०'—अरसमप्राप्तरसं—हिंग्वादिभिरसंस्कृत, विरसं—पुराणौदनादि, सूचितं—व्यञ्जनादि युक्तम्, असूचितं—तद्रहितं वा, कथयित्वाऽकथयित्वा वा दत्तमित्यन्ये, आर्द्रं वा—प्रचुरव्यञ्जनं ( यदिवा शुष्कं—स्तोकव्यञ्जनं, मन्थुकुल्माषभोजनम् ), मन्थुः—बदरचूर्णं, कुल्माषाः—सिद्धमाषाः, यवमाषा इत्यन्ये ॥ ९८ ॥

उप्पण्णं नाइहीलिज्जा अप्पं वा बहुफासुअं ।
मुहालद्धं मुहाजीवी भुंजिज्जा दोसवज्जिअं ॥ ९९ ॥
छा० उत्पन्नं नातिहीलयेत्, अल्पं वा बहुप्रासुकम् ।
मुधालब्धं मुधाजीवी, भुञ्जीत दोषवर्जितम् ॥ ९९ ॥

'उप्पण्णं०'—उत्पन्नं—विधिना प्राप्तं नाऽतिहीलयेत्, अल्पमात्रं—न देहपूरकमिति, किमनेन ? बहु वाऽसारप्रायमिति, वा भिन्नक्रमे, बहुप्रासुकं—सर्वथा शुद्धं नाऽतिहीलयेत्, मुधालब्धं—[1]वटिका-चर्पटिकादि-व्यतिरेकेण प्राप्तं, मुधाजीवी-सर्वथा अनिदानजीवी, जात्याद्यनाजीवक इत्यन्ये । भुञ्जीत दोषवर्जितं-संयोजनादिरहितम् ॥ ९९ ॥

१ 'कोण्टलादिव्यतिरेकेण'—'मन्त्रतन्त्रादिना अप्राप्तम्' इति वृत्त्यन्तरस्थ पाठौ ।

दुल्लहा उ मुहादाई मुहाजीवी वि दुल्लहा ।
मुहादाई मुहाजीवी दो वि गच्छंति सुग्गइं ॥ १०० ॥ त्ति बेमि ।

छा० दुर्लभस्तु मुधादाता, मुधाजीव्यपि दुर्लभः ।
मुधादाता मुधाजीवी, द्वावपि गच्छतः सुगतिम् ॥ १०० ॥ इति ब्रवीमि ।

'दुल्लहा०'—दुर्लभा एव मुधादातारः, तथाविधभागवतवत्, मुधाजीविनोऽपि दुर्लभाः, तथाविधचेल्लकवत्, मुधादातारो मुधाजीविनश्च द्वावप्येतौ गच्छतः सुगतिं—सिद्धिगतिम् । ब्रवीमीति पूर्ववत् । तत्र भागवतोदाहरणं, जहा- "एगो परिव्वायगो, सो एगं भागवयं उवट्ठिओ, अहं तव गिहे वरिसारत्तं करेमि,-मम उदंतं वहाहि, तेण भणिओ-जइ मम उदंतं न वहसि, एवं हवउत्ति । सो से भागवओ सिज्जभत्तपाणादिणा उदंतं वहति, अण्णया अ तस्स घोडओ चोरेहिं हिओ, अतिप्पभायं ति काऊण जालीए बद्धो, सो अ परिव्वायगो तलाए गओ ण्हाइउं, तेण सो घोडओ दिट्ठो, आगंतुं(तूण) भणइ—मम पाणीयतडे पोत्ती विस्सरिया, गोहो विसज्जिओ, तेण सो घोडओ दिट्ठो, आगंतुं(तूण) कहिअं तेण, भागवएण णायं, जहा—परिव्वायगेण कहिअं, तेण परिव्वायगो भण्णति—जाहि, णाहं तव णिव्विट्ठं उदंतं वहामि, णिव्विट्ठं अप्पफलं भवति । एरिसो मुधादाई" । मुधाजीविंमि उदाहरणं—"एगो राया धम्मं परिक्खइ—को धम्मो ? जो अणिव्विट्ठं भुंजइ(त्ति), तो तं परिक्खावित्ति काऊण मणुस्सा संदिट्ठा, राया मोदए देइ, तत्थ बहवे कप्पडियादयो आगया, पुच्छिज्जंति—तुब्भे केण भुंजह ? अण्णो भणइ—अहं मुहेण भुंजामि, अण्णो—अहं पाएहिं, अण्णो—अहं हत्थेहिं, अण्णो—अहं लोगाणुग्गहेणं, इयरो ( चेल्लओ भणइ—अहं ) मुहिआए।

रण्णा पुच्छियं–कहं चिअ ? एगेण भणियं–अहं कहकहगो अओ मुहेणं, अण्णेण भणियं–अहं लेहवाहगो अओ पाएहिं, अण्णेण भणियं–अहं लेहगो अओ हत्थेहिं, भिक्खुणा भणियं–अहं पव्वइओ अओ लोगाणुग्गहेण, चेल्लएण भणियं–अहं संजायसंसारविरागो अओ मुहिआए, ताहे सो राया एस धम्मोत्ति काऊण आयरियसमीवं गओ, पडिबुद्धो पव्वइओ अ । एसो मुहाजीवित्ति" ॥ १०० ॥ इति पिण्डैषणाध्ययनस्य पञ्चमस्य प्रथमोद्देशाऽवचूर्णिः ।



## ॥ अथ द्वितीयोद्देशः ॥



पिण्डैषणायाः प्रथमोद्देशके प्रक्रान्तोपयोगि यन्नोक्तं तदाह—

पडिग्गहं संलिहित्ताणं लेवमायाइ संजए।
दुग्गंधं वा सुगंधं वा सव्वं भुंजे न छड्डए ॥ १ ॥

छा० पतद्ग्रहं (प्रतिग्रहं) संलिख्य, लेपमात्रया संयतः।
दुर्गन्धि वा सुगन्धि वा, सर्वं भुञ्जीत न छर्दयेत् ॥ १ ॥

'पडिग्गहं०'—प्रतिग्रहं(पतद्ग्रहं)—भाजनं संलिख्य—प्रदेशिन्या निरवयवं कृत्वा, कथमित्याह—लेपमर्यादया—आलेपं संलिह्य संयतो दुर्गन्धि वा सुगन्धि वा भोजनजातं, गन्धग्रहणं रसाद्युपलक्षणं, सर्वं निरवशेषं भुञ्जीत—अश्नीयात् नोज्झेत्, मा भूत्संयमविराधनेति। अस्यैवार्थस्य गरीयस्त्वख्यापनाय सूत्रार्थयोर्व्यत्ययोपन्यासः, प्रतिग्रह(पतद्ग्रह)-शब्दो माङ्गलिक इत्युद्देशादौ तदुपन्यासार्थं वा, अन्यथैवं स्यात्—दुर्गन्धि वा सुगन्धि वा सर्वं भुञ्जीत, नोज्झेत्। प्रतिग्रहं(पतद्ग्रहं) संलिह्य लेपमर्यादया संयतः। विचित्रा च सूत्रगतिरिति ॥ १ ॥ विधिविशेषमाह—

सिज्जा निसीहिआए समावण्णो अ गोअरे।
आ(अ)यावयट्ठा भुच्चाणं जइ तेण न संथरे ॥ २ ॥

छा० शय्यायां नैषेधिक्यां, समापन्नश्च गोचरे ।
आ(अ)यावदर्थं भुक्त्वा, यदि तेन न संस्तरेत् ॥ २ ॥

'सिज्जा०'–शय्यायां–वसतौ, नैषेधिक्यां–स्वाध्यायभूमौ, शय्यैव वा असमंजसनिषेधान्नैषेधिकी तस्याम्, समापन्नो वा गोचरे, क्षपकादिश्छन्नमठादौ अयावदर्थं भुक्त्वा, न यावदर्थमपरिसमाप्तमित्यर्थः,'णं' इति वाक्याऽलङ्कारे । यदि तेन भुक्तेन न संस्तरेत्–न यापयितुं समर्थः ॥ २ ॥

तओ कारणमुप्पण्णे भत्तपाणं गवेसए ।
विहिणा पुव्वउत्तेण इमेण उत्तरेण य ॥ ३ ॥

छा० ततः कारण उत्पन्ने, भक्तपानं गवेषयेत् ।
विधिना पूर्वोक्तेन, अनेनोत्तरेण च ॥ ३ ॥

'तओ कारण०'–ततः कारणे वेदनादावुत्पन्ने भक्तपानं गवेषयेत्, अन्यथा सकृद्भुक्तमेव यतीनामिति । विधिना पूर्वोक्तेन, अनेन वक्ष्यमाणलक्षणेनोत्तरेण वा(च) इति ॥ ३ ॥

कालेण निक्खमे भिक्खू कालेण य पडिक्कमे ।
अकालं च विवज्जित्ता काले कालं समाअरे ॥ ४ ॥

छा० कालेन निष्क्रामेद्भिक्षुः, कालेन च प्रतिक्रामेत् ।
अकालं च विवर्ज्य, काले कालं समाचरेत् ॥ ४ ॥

'कालेण०'–कालेन यो यस्मिन् ग्रामादौ उचितो भिक्षाकालः, तेन निष्क्रामेत्–व्रजेद् भिक्षुः, भिक्षार्थं (इति)शेषः, कालेन च प्रतिक्रामेत्–निवर्तेत, 'अकालं च विवर्जयित्वा काले कालं समाचरेदि'ति सर्वयोगोपसङ्ग्रहार्थं निगमनम्, भिक्षावेलायां भिक्षां चरेत्, स्वाध्यायवेलायां स्वाध्यायादीनि, इति ॥ ४ ॥ अकालचरणे दोषमाह—

अकाले चरसि भिक्खू कालं न पडिलेहसि ।
अप्पाणं च किलामेसि सण्णिवेसं च गरिहसि ॥ ५ ॥

छा० अकाले चरसि भिक्षो!, कालं न प्रतिलिखसि ।
आत्मानं च क्लमयसि, सन्निवेशं च गर्हसे ॥ ५ ॥

'अकाले०'–अकालचारी कश्चित्साधुरलब्धभैक्षः केनचित्साधुना–'प्राप्ता न वेति' अभिहितः सन्नेवं ब्रूयात्–'कुतोऽत्र सन्निवेशो–स्थण्डिले भिक्षा ?' स तेनोच्यते–अकाले चरसि भिक्षो ! प्रमादात् स्वाध्यायलोभाद्[1], कालं न प्रत्युपेक्षसे, किमयं भिक्षाकालो न वेति, अकालचरणेन चाऽऽत्मानं क्लमयसि, सन्निवेशं च गर्हसि(से) ॥ ५ ॥ यस्मादयं दोषः, तस्मात् काले भिक्षाऽटनं कर्तव्यमित्याह—

सइ काले चरे भिक्खू कुज्जा पुरिसकारिअं ।
अलाभुत्ति न सोइज्जा, तउत्ति अहिआसए ॥ ६ ॥

छा॰ सति काले चरेद्भिक्षुः, कुर्यात्पुरुषकारम्।
अलाभ इति न शोचयेत्, तप इत्यध्यासयेत् (अधिसहेत) ॥ ६ ॥



'सइ काले०'—सति काले चरेद्भिक्षुः, अन्ये तु व्याचक्षते—स्मृतिकाल एव भिक्षाकालोऽभिधीयते, स्मर्यन्ते यत्र भिक्षुकाः स स्मृतिकालः, तस्मिन्, चरेद्भिक्षुः कुर्यात्पुरुषकारं जङ्घाबले सति, अलाभेऽपि सति भिक्षाया अलाभ इति न शोचयेत्, अपि तु तप इति अधिसहेत ॥ ६ ॥ उक्ता कालयतना, क्षेत्रयतनामाह—

तहेवुच्चावया पाणा भत्तट्ठाए समागया।
तं उज्जुअं न गच्छिज्जा जयमेव परक्कमे ॥ ७ ॥

छा॰ तथैवोच्चावचाः प्राणिनः, भक्तार्थं समागताः।
तदृजुकं न गच्छेत्, यतमेव पराक्रामेत् ॥ ७ ॥

'तहेवु॰'—तथैव उच्चाऽवचा वा शोभनाऽशोभनभेदेन नानाप्रकाराः प्राणिनो भक्ताऽर्थे(र्थं) समागताः बलिप्राभृतिकादिषु आगता भवन्ति, तदृजुकं—तेषामभिमुखं न गच्छेत्, तत्र(तत्)सन्त्रासेनाऽन्तरायाऽधिकरणादि-दोषात्, किन्तु यतमेव पराक्रामेत् ॥ ७ ॥

गोअरग्गपविट्ठो उ न निसीइज्ज कत्थइ।
कहं च न पबंधिज्जा चिट्ठित्ताण व संजए ॥ ८ ॥

छा० गोचराग्रप्रविष्टस्तु, न निषीदेत्कुत्रचित् ।
कथां च न प्रबध्नीयात् , स्थित्वा वा संयतः ॥ ८ ॥



'गोअरग०'—गोचराग्रप्रविष्टस्तु, न निषीदेत्—नोपविशेत् कचिद्गृहदेवकुलादौ, कथां च न प्रबध्नीयात्, अनेनैकव्याकरणैकज्ञाताऽनुज्ञामाह, अत एवाह—स्थित्वा कालपरिग्रहेण संयत इति, अनेषणाद्वेषादिदोषप्रसङ्गात् ॥ ८ ॥ उक्ता क्षेत्रयतना, द्रव्ययतनामाह—

अग्गलं फलिहं दारं कवाडं वा वि संजए ।
अवलंबिआ न चिट्ठिज्जा गोअरग्गगओ मुणी ॥ ९ ॥

छा० अर्गलां परिघं द्वारं, कपाटं वाऽपि संयतः ।
अवलम्ब्य न तिष्ठेत्, गोचराग्रगतो मुनिः ॥ ९ ॥

'अर्गलं०'—अर्गलं—गोपुरकपाटादिसम्बन्धिनं, परिघं—नगरद्वारादिसम्बन्धिनं, द्वारं—शाखामयं, कपाटं—द्वारयन्त्रं, वाऽपि संयतः, अवलम्ब्य न तिष्ठेत्, लाघवविराधनादोषात्, गोचराग्रगतः—भिक्षाप्रविष्टः, मुनिः संयत इति पर्यायौ, तदुपदेशाऽधिकाराददुष्टावेव ॥ ९ ॥ उक्ताद्रव्ययतना, भावयतनामाह—



समणं माहणं वा वि किविणं वा वणीमगं ।
उवसंकमंतं भत्तट्ठा पाणट्ठाए व संजए ॥ १० ॥

छा० श्रमणं ब्राह्मणं वाऽपि, कृपणं वा वनीपकम् ।
उपसङ्क्रामन्तं भक्तार्थं, पानार्थं वा संयतः ॥ १० ॥

'समणं०'—श्रमणं—निर्ग्रन्थादिरूपम्, माहणं—धिग्वर्णं, वाऽपि कृपणं वा पिण्डोलकं, वनीपकं—दरिद्रं, एतेषां चतुर्णामन्यतमम् उपसङ्क्रामन्तं—सामीप्येन गच्छन्तं गतं वा भक्ताऽर्थं पानाऽर्थं वा संयतः ॥१०॥ किमित्याह—

तं अइक्कमित्तु न पविसे न चिट्ठे चक्खुगोअरे ।
एगंतमवक्कमित्ता तत्थ चिट्ठिज्ज संजए ॥ ११ ॥

छा० तमतिक्रम्य न प्रविशेत्, न तिष्ठेच्चक्षुर्गोचरे ।
एकान्तमवक्रम्य, तत्र तिष्ठेत् संयतः ॥ ११ ॥

'तं अइक्कमित्तु०'—तं श्रमणादिमतिक्रम्य न प्रविशेत्, न तिष्ठेच्चक्षुर्गोचरे, कस्तत्र विधिरित्याह—एकान्तमवक्रम्य तत्र तिष्ठेत्संयतः ॥ ११ ॥ अन्यथैते दोषा इत्याह—

वणीमगस्स वा तस्स दायगस्सुभयस्स वा ।
अप्पत्तिअं सिआ हुज्जा लहुत्तं पवयणस्स वा ॥ १२ ॥

छा० वनीपकस्य वा तस्य, दायकस्योभयोर्वा ।
अप्रीतिः स्याद्भवेत्, लघुत्वं प्रवचनस्य वा ॥ १२ ॥



---

१ पञ्चानामन्यतममिति च दृश्यते । २ 'अप्रत्ययिकम्' इति मौलिकं पदं भाति ।

'वणीमगस्स०'–'वनीपकस्य वा तस्य' इत्येतच्छ्रमणाद्युपलक्षणं, दातुर्वा, उभयोर्वा अप्रीतिः स्यात्–कदाचिद्भवेत्, अहो अलोकज्ञतैतेषामिति, लघुत्वं प्रवचनस्य स्यात्, अन्तरायदोषश्च ॥ १२ ॥ अतः—

पडिसेहिए व दिण्णे वा तओ तम्मि निअत्तिए ।
उवसंकमिज्ज भत्तट्ठा पाणट्ठाए व संजए ॥ १३ ॥

छा० प्रतिषेधिते(प्रतिषिद्धे) वा दत्ते वा, ततस्तस्मिन्निवर्तिते ।
उपसङ्क्रामेद्भक्तार्थं, पानार्थं वा संयतः ॥ १३ ॥

'पडिसेहिए०'–प्रतिषिद्धे वा दत्ते वा ततः स्थानात् तस्मिन्वनीपकादौ निवर्तिते सति, उपसङ्क्रामेत्, भक्तार्थं पानार्थं वा संयतः ॥ १३ ॥ परपीडानिषेधाऽधिकारादिदमाह—

उप्पलं पउमं वा वि कुमुअं वा मगदंतिअं ।
अण्णं वा पुप्फसच्चित्तं तं च संलुंचिआ दए ॥ १४ ॥

छा० उत्पलं पद्मं वाऽपि, कुमुदं वा मगमल्लिका(दन्तिका)म् ।
अन्यद्वा पुष्पसचित्तं, तच्च संलुञ्च्य दद्यात् ॥ १४ ॥

'उप्पलं०'–उत्पलं नीलोत्पलादि, पद्मम्–अरविन्दं, कुमुदं वा–गर्दभकं, मगदन्तिका–मेत्तिका, मल्लिकामित्यन्ये, अन्यद्वा पुष्पं सचित्तं तत्तु(च) संलुञ्च्य–अपनीय छित्त्वा दद्यात् ॥ १४ ॥

तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ १५ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ १५ ॥

'तं भवे०'—पूर्ववत् ॥ १५ ॥

उप्पलं पउमं वा वि कुमुअं वा मगदंतिअं ।
अण्णं वा पुप्फसच्चित्तं तं च संमद्दिआ दए ॥ १६ ॥

छा० उत्पलं पद्मं वाऽपि, कुमुदं वा मगमल्लिका(दन्तिका)म् ।
अन्यद्वा पुप्पसचित्तं, तच्च संमृद्य दद्यात् ॥ १६ ॥

'उप्पलं०'—तं चेत्यादि, तच्च संमृद्य दद्यात्, संमर्दनं नाम पूर्वच्छिन्नानामेवाऽपरिणतानां मर्दनम्, शेषं तथैव ॥ १६ ॥ आह—एतत्पूर्वमप्युक्तमेव—'संमद्दमाणी पाणाणि बीआणि हरिआणि अ' इत्यत्र, उच्यते—उक्तं सामान्येन, विशेषाऽभिधानाददोषः ।



तं भवे भत्तपाणं तु संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ १७ ॥

छा० तद्भवेद्भक्तपानं तु, संयतानामकल्पिकम् ।
दद‌तीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ १७ ॥

'तं भवे०'—पूर्ववत् ॥ १७ ॥

सालुअं वा विरालिअं कुमुअं उप्पलणालिअं ।
मुणालिअं सासवणालिअं इच्छुखंडं अणिव्वुडं ॥ १८ ॥

छा० शालूकं वा विरालिकां, कुमुदमुत्पलनालिकाम् ।
मृणालिकां सर्षपनालिकाम्, इक्षुखण्डमनिर्वृतम् ॥ १८ ॥

'सालुअं०'—शालूकं वा—उत्पलकन्दं, विरालिकां-पलाशकन्दरूपां, पर्ववल्लि—प्रतिपर्ववल्लि, प्रतिपर्वकन्दमित्यन्ये, कुमुदोत्पलस्य पर्वणि पर्वणि वल्ली निर्गच्छति, कन्दश्च भवति, कुमुदोत्पलनालो प्रतीतौ, तथा मृणालिकां-पद्मिनीकन्दोत्थां, सर्षपनालिकां—सिद्धार्थमञ्जरीम्, तथा इक्षुखण्डम् अनिर्वृतं—सचित्तम्, एतच्चाऽनिर्वृतग्रहणं सर्वत्राऽपि सम्बध्यते ॥ १८ ॥



तरुणगं वा पवालं रुक्खस्स तणगस्स वा ।
अण्णस्स वा वि हरिअस्स आमगं परिवज्जए ॥१९ ॥

छा० तरुणकं वा प्रवालं, वृक्षस्य तृणस्य वा ।
अन्यस्य वाऽपि हरितस्य, आमकं परिवर्जयेत् ॥ १९ ॥

'तरुणगं०'–तरुणकं वा प्रवालं–पल्लवं वृक्षस्य चिञ्चिणिकादेः, तृणस्य वा मधुर-तृणादेः, अन्यस्य वा हरितस्याऽर्यकादेः, आमम्–अपरिणतं वर्जयेत् ॥ १९ ॥

तरुणिअं वा छिवाडिं आमिअं भज्जिअं सइं ।
दिंतिअं पडिआइक्खे न मे कप्पइ तारिसं ॥ २० ॥

छा० तरुणां वा फलिम्(छिवाडिं), आमां भर्जितां सकृत् ।
ददतीं प्रत्याचक्षीत, न मे कल्पते तादृशम् ॥ २० ॥

'तरुणिअं०'–तरुणां वा असंजातां, छिवाडिमिति मुद्गादिफलीम्, आमाम्-असिद्धां-सचेतनां भर्जितां वा सकृदेकवारम्, शेषं पूर्ववत् ॥ २० ॥

तहा कोलमणुस्सिन्नं वेलुअं कासवणालिअं ।
तिलपप्पडगं नीमं आमगं परिवज्जए ॥ २१ ॥

छा० तथाकोलमनुस्विन्नं, वेणुकं काश्यपनालिकाम् ।
तिलपर्पटिकां निम्बम्, आमकं परिवर्जयेत् ॥ २१ ॥



---

१ श्रीपर्णीफलम्, इत्यर्थः ।

'तहा कोल०'—कोलं—बदरम्, अस्विन्नं—वह्न्युदकयोगेन अनापादितविकारान्तरम्, वेणुकं—वंशकरिल्लं, 'कासवणालिअं'—श्रीपर्णीफलम्, अस्विन्नमिति सर्वत्र योज्यम्, तिलपर्पटं—पिष्टतिलमयं, नीमं—नीमफलम्, आमं परिवर्जयेत् ॥ २१ ॥

तहेव चाउलं पिट्ठं विअडं वा तत्तनिव्वुडं ।
तिलपिट्ठ पुइपिण्णागं आमगं परिवज्जए ॥ २२ ॥

छा० तथैव ताण्डुलं पिष्टं, विकटं वा तप्तनिर्वृतम् ।
तिलपिष्टं पूतिपिण्याकम्, आमकं परिवर्जयेत् ॥ २२ ॥

'तहेव०'—तथैव तान्दुलं पिष्टं-लोट्टमित्यर्थः, विकटं वा शुद्धोदकम्, तप्तनिर्वृतं क्वथितं सत्—शीतीभूतं, तप्ताऽनिर्वृतं वा—अप्रवृत्तत्रिदण्डं, तिलपिष्टं, पूतिपिन्नागं(ण्याकं)—सर्षपखलम्, आमं परिवर्जयेत् ॥ २२ ॥

कविट्ठं माउलिंगं च मूलगं मूलगत्तिअं ।
आमं असत्थपरिणयं मणसा वि न पत्थए ॥ २३ ॥

छा० कपित्थं मातुलिङ्गं च, मूलकं मूलवर्तिकाम् ।
आमामशस्त्रपरिणतां, मनसाऽपि न प्रार्थयेत् ॥ २३ ॥

'कविट्ठं०'–कपित्थं–कपित्थफलं, मातुलिङ्गं च–बीजपूरकं च, मूलकं–सपत्रजालकं, मूलवर्तिकां–मूलकन्दस्य च फलीम्, आमाम्–अपक्काम्, अशस्त्रपरिणतां–स्वकायशस्त्राद्यविद्धां(विध्वस्तां) वा, अनन्तकायत्वाद् गुरुत्वख्यापनार्थमुभयं, मनसाऽपि न प्रार्थयेत् ॥ २३ ॥

तहेव फलमंथूणि बीअमंथूणि जाणिआ ।
विहेलगं पिआलं च आमगं परिवज्जए ॥ २४ ॥

छा० तथैव फलमन्थून्, बीजमन्थून्ज्ञात्वा ।
बिभीतकं प्रियालं च, आमकं परिवर्जयेत् ॥ २४ ॥

'तहेव०'–तथैव फलमन्थून्–बदरचूर्णान्, बीजमन्थून्–यवादिचूर्णान् ज्ञात्वा, बिभीतकं–बिभीतकफलं, प्रियालं वा–प्रियालफलं वा, आममपरिणतं वर्जयेत् ॥ २४ ॥ विधिमाह—

समुआणं चरे भिक्खू कुलं उच्चावयं सया ।
नीअं कुलमइक्कम्म ऊसढं नाभिधारए ॥ २५ ॥

छा० समुदानं चरेद्भिक्षुः, कुलमुच्चावचं सदा ।
नीचं कुलमतिक्रम्य, उत्सृतं नाभिधारयेत् ॥ २५ ॥

१ 'मूलकर्त्तिकां, मूलकन्दचक्कलिम्', इत्यपि दृश्यते पाठः ।

'समुआणं०'—समुदानं—भावभैक्ष्यमाश्रित्य चरेद्भिक्षुः, केत्याह—कुलमुच्चाऽवचं सदा, अगर्हितत्वे सति विभवापेक्षया प्रधानमप्रधानं वा यथा परिपाट्यैव चरेत्, सदा नीचं कुलमतिक्रम्य विभवापेक्षया प्रभूततरलाभार्थम् उच्छ्रितम्—ऋद्धिमत्कुलं नाऽभिधारयेत्—न यायात्, अभिष्वङ्गलोकलाघवादिप्रसङ्गात् ॥ २५ ॥

अदीणो वित्तिमेसिज्जा न विसीइज्ज पंडिए ।
अमुच्छिओ भोअणम्मि मायण्णे एसणारए ॥ २६ ॥
छा० अदीनो वृत्तिमेषयेत्, न विषीदेत्पण्डितः ।
अमूर्च्छितो भोजने, मात्राज्ञ एषणारतः ॥ २६ ॥

'अदीणो०'—अदीनो वृत्तिमेषयेत्, न विषीदेत्, अलाभेऽपि सति पण्डितः, अमूर्च्छितोऽगृद्धो भोजने मात्राज्ञः-आहारमात्रां प्रत्येषणारतः ॥ २६ ॥

बहुं परघरे अत्थि विविहं खाइमसाइमं
न तत्थ पंडिओ कुप्पे इच्छा दिज्ज परो न वा ॥ २७ ॥
छा० बहु परगृहेऽस्ति, विविधं खाद्यं स्वाद्यम् ।
न तत्र पण्डितः कुप्येत्, इच्छया(इच्छा)दद्यात्परो न वा ॥ २७ ॥

'बहुं०'–एवं च भावयेत्–बहु प्रमाणतः प्रभूतं परगृहे–असंयतादिगृहेऽस्ति विविधमनेकप्रकारं खाद्यं स्वाद्यं, सदपि न ददातीति न तत्र पण्डितः कुप्येत्, किन्तु 'इच्छया दद्यात्परो न वे'ति इच्छा परस्य, न तत्राऽन्यत्किञ्चिद्विचिन्तयेत्, सामायिकबाधनात् ॥ २७ ॥

सयणासणवत्थं वा भत्तं पाणं च संजए ।
अदिंतस्स न कुप्पिज्जा पच्चक्खे वि अ दीसओ ॥ २८ ॥

छा० शयनाऽऽसनवस्त्रं वा, भक्तं पानं च संयतः ।
अददते न कुप्येत्, प्रत्यक्षेऽपि च दृश्यमाने(पश्यतः) ॥ २८ ॥

'सयणा०'–शयनाऽऽसनवस्त्रं वेत्येकवद्भावः, भक्तं पानं वा संयतः । अददतो(ते) न कुप्येत् तत्स्वामिनः, प्रत्यक्षेऽपि च दृश्यमाने शयनाऽऽसनादौ ॥ २८ ॥

इत्थिअं पुरिसं वा वि डहरं वा महल्लगं ।
वंदमाणं न जाइज्जा णो अ णं फरुसं वए ॥ २९ ॥

छा० स्त्रियं पुरुषं वाऽपि, तरुणं(डहरं)वा वृद्धम्(महल्लकम्) ।
वन्दमानं न याचेत, नो चैनं परुषं वदेत् ॥ २९ ॥

'इत्थिअं०'—स्त्रियं वा पुरुषं वाऽपि, 'अपि'—शब्दान्नपुंसकं वा, डहरं—तरुणं, महल्लकं वा—वृद्धं वा, 'वा' शब्दान्मध्यमं वा, वन्दमानं सन्तं भद्रोऽऽकार्य इति न याचेत, विपरिणामदोषात्, अन्नाद्यभावेन याचिताऽदाने न चैनं परुषं ब्रूयात्—वृथा ते वन्दनमित्यादि, पाठान्तरं वा—वन्दमानो न याचे(च्ये)त लखि(विधि)व्याकरणेन, शेषं पूर्ववत् ॥ २९ ॥

जे न वंदे न से कुप्पे वंदिओ न समुक्कसे ।
एवमण्णेसमाणस्स सामण्णमणुचिट्ठइ ॥ ३० ॥
छा० यो न वन्दते न तस्मै कुप्येत्, वन्दितो न समुत्कर्षेत् ।
एवमन्वेषमाणस्य, श्रामण्यमनुतिष्ठति ॥ ३० ॥

'जो न वंदे०'—यो न वन्दते न से—तस्य(स्मै) कुप्येत्, वन्दितः केनचिन्नृपादिना न समुत्कर्षेत्—उत्कर्षं न कुर्यात्, एवमुक्तप्रकारेणाऽन्वेषमाणस्य—भगवदाज्ञामनुपालयतः श्रामण्यमनुतिष्ठत्यखण्डम् ॥ ३० ॥ स्वपक्षस्तेयप्रतिषेधमाह—

सिआ एगइओ लद्धुं लोभेण विणिगूहइ ।
मा मेअं दाइयं संतं दट्ठूणं सयमायए ॥ ३१ ॥
छा० स्यादेकाकिको लब्ध्वा, लोभेन विनिगूहते ।
मा ममेदं दर्शितं सत्, दृष्ट्वा स्वयमादद्यात् ॥ ३१ ॥



---

१ 'भद्रकोऽयमिति न याचेत' इति पाठः । २ 'एककिकः' इत्यर्थे एकाकीति युक्तम् ।

'सिआ०'–स्यात्कदाचिद् एककः कश्चिदत्यन्तजघन्यो लब्ध्वोत्कृष्टमाहारं लोभेन विनिगूहते–'अहमेव भोक्ष्ये इति', अन्तप्रान्तादिना छादयति, मा ममेदं भोजनजातं दर्शितं सत्, दृष्ट्वा आचार्यादिः स्वयमादद्यात्-गृह्णीयात् ॥ ३१ ॥ अस्य दोषमाह—

अत्तट्ठा गुरुओ लुद्धो बहुं पावं पकुव्वइ ।
दुत्तोसओ अ से होइ निव्वाणं च न गच्छइ ॥ ३२ ॥

छा० आत्मार्थगुरुको लुब्धः, बहु पापं प्रकरोति ।
दुस्तोषश्च स भवति, निर्वाणं च न गच्छति ॥ ३२ ॥

'अत्तट्ठा०'–आत्मार्थ एव गुरुः पापप्रधानो यस्य स आत्मार्थगुरुः, लुब्धः सन् क्षुद्रभोजने बहु–प्रभूतं पापं करोति, मायया दारिद्र्यं कर्मेत्यर्थः, अयं परलोकदोषः, इहलोकदोषमाह–दुस्तोषश्च भवति येन केनचिदाहारेणास्य क्षुद्रसत्त्वस्य तुष्टिः कर्तुं न शक्यते, अत एव निर्वाणं च न गच्छति, इहलोक एव धृतिं न लभते, अनन्तसंसारिकत्वाद्वा मोक्षं न गच्छति ॥ ३२ ॥ एवं यः प्रत्यक्षः प्रत्यक्षमपहरति स उक्तः, अथ यः परोक्षं स उच्यते—



सिआ एगइओ लद्धुं विविहं पाणभोअणं ।
भद्दगं भद्दगं भुच्चा विवण्णं विरसमाहरे ॥ ३३ ॥

छा० स्यादेकाकी लब्ध्वा, विविधं पानभोजनम् ।
भद्रकं भद्रकं भुक्त्वा, विवर्णं विरसमाहरेत् ॥ ३३ ॥

'सिआ एगइओ०'–(पूर्ववत्) विविधमनेकप्रकारं पानभोजनं, तत्रैव भद्रकं भद्रकं–घृतपूर्णादि भुक्त्वा विवर्णं–विगतवर्णम्–आम्लखलादि, विरसं–शीतोदनादि, आहरेत्–आनयेत् ॥३३॥ एवं किमर्थं कुर्यात् ? इत्याह—

जाणंतु ता इमे समणा, आययट्ठी अयं मुणी ।
संतुट्ठो सेवए पंतं लूहवित्ती सुतोसओ ॥ ३४ ॥

छा० जानन्तु तावदिमे श्रमणाः, आयतार्थ्ययं मुनिः ।
सन्तुष्टः सेवते प्रान्तं, रूक्षवृत्तिः सुतोष्यः ॥ ३४ ॥

'जाणंतु०'–जानन्तु तावन्मां श्रमणाः–शेषसाधवः,यथा–आयतार्थी अयं मुनिः, सन्तुष्टो लाभाऽलाभयोः समः सेवते प्रान्तमसारं रूक्षवृत्तिः–संयमवृत्तिः, सुतोष्यः–येन केनचित्तोषं नीयते ॥ ३४ ॥ एतदपि किमर्थं कुर्यात् ? इत्याह—

पूअणट्ठा जसोकामी माणसम्माणकामए ।
बहुं पसवइ पावं मायासल्लं च कुव्वइ ॥ ३५ ॥

छा० पूजनार्थं यशस्कामी, मानसन्मानकामुकः ।
बहु प्रसूते पापं, मायाशल्यं च करोति ॥ ३५ ॥

'पूअणट्ठा०'—पूजार्थमेवं कुर्वतः स्वपरपक्षाभ्यां सामान्येन पूजा भविष्यतीति, यशस्कामी-अहो अयमिति प्रवादार्थं वा, मानसन्मानकाम एवं कुर्यात्, तत्र वन्दनाऽभ्युत्थानलाभनिमित्तो मानः, वस्त्रपात्रादिलाभनिमित्तश्च सन्मान इति, स एवम्भूतो बहु प्रसूते—निर्वर्त्तयति पापम्, तद् गुरुत्वादेव सम्यगनालोचयन् मायाशल्यं च—भावशल्यं च करोति ॥ ३५ ॥ प्रतिषेधाऽन्तरमाह—

सुरं वा मेरगं वा वि अण्णं वा मज्जगं रसं ।
ससक्खं न पिबे भिक्खू जसं सारक्खमप्पणो ॥ ३६ ॥
छा० सुरां वा मेरकं वाऽपि, अन्यद्वा मद्यकं रसम् ।
ससाक्ष्यं न पिबेद्भिक्षुः, यशः संरक्षन्नात्मनः ॥ ३६ ॥

'सुरं वा०'—सुरां वा—पिष्टादिनिष्पन्नां, मेरकं वाऽपि—प्रसन्नाख्यं, सुराप्रायोग्यद्रव्यनिष्पन्नमन्यं वा माद्यं रसं सीध्वादिरूपं ससाक्षिकं—सदा परित्यागे केवल्यादयः साक्षिणो यस्य तत्ससाक्षि, अनेन सर्वथा प्रतिषेध उक्तः, सदासाक्षिभावात्, किमिति—न पिबेद् भिक्षुः, यशः संरक्षन्नात्मनः—'यशः'—शब्देन संयमोऽभिधीयते,- अन्ये तु ग्लानापवादविषयमेतत्सूत्रम् अल्पसागारिकविधानेन व्याचक्षते ॥ ३६ ॥ अत्रैव दोषमाह—

पियँए एगओ तेणो न मे कोइ वियाणइ ।
तस्स पस्सह दोसाइं नियडिं च सुणेह मे ॥ ३७ ॥



१ 'पिआ एगइओ', इति प्राचीनलिखिताऽऽदर्शेऽस्ति, परं तन्न शुद्धं प्रतिभाति ।

छा० पिबत्येकक: स्तेन:, न मां कोऽपि विजानाति ।
तस्य पश्यत दोषान्, निकृतिं च शृणुत मत् ॥ ३७ ॥



'पियए०'–पिबत्येको धर्मसहायविप्रमुक्त: स्तेन:–चौरोऽसौ भगवददत्तग्रहणात्, अन्यापदेशयाचनाद्वा, न मां कश्चिज्जानातीति भावयन्, तस्येत्थम्भूतस्य पश्यत दोषान्, ऐहिकान् पारलौकिकांश्च, निकृतिं च–मायां, (शृणुत) मे–मम, सकाशादिति शेष: ॥ ३७ ॥

वड्ढइ सुंडिआ तस्स मायामोसं च भिक्खुणो ।
अयसो अ अनिव्वाणं सययं च असाहुआ ॥ ३८ ॥
छा० वर्द्धते शौण्डिकता तस्य, मायामृषा च भिक्षो: ।
अयशश्चानिर्वाणं, सततं चासाधुता ॥ ३८ ॥

'वड्ढइ०'–वर्द्धते शौण्डिकता तदत्यन्ताऽभिष्वङ्गरूपा तस्य मायामृषावादं च भिक्षो:, इदं च भवपरम्परा-हेतुरनुबन्धदोषात्, (तथा) अयशश्च स्वपक्षपरपक्षयो:–अनिर्वाणम्–अनिर्वृति:–दु:खं(तदलाभे), सततं चाऽसाधुता लोके व्यवहारत:, चरणपरिणामबाधनेन परमार्थत: ॥ ३८ ॥



१ 'अन्योपदेशयाचनाद्वा' इति वा पाठ: । २ 'अवृत्ति:' इत्यपि पाठ: ।

निच्चुव्विग्गो जहा तेणो अत्तकम्मेहिं दुम्मई
तारिसो मरणंते वि न आराहेइ संवरं ॥ ३९ ॥

छा० नित्यमुद्विग्नो यथास्तेनः, आत्मकर्मभिर्दुर्मतिः ।
तादृशो मरणान्तेऽपि, नाराधयति संवरम् ॥ ३९ ॥

'निच्चुव्विग्गो०'—स ईदृशो नित्यो(त्यमु)द्विग्नः—सदाऽप्रशान्तः, यथा स्तेनश्चौरः, आत्मकर्मभिर्दुर्मतिः (तथा) तादृशः क्लिष्टसत्त्वः, मरणान्तेऽपि—चरमकालेऽपि नाराधयति संवरम्—चारित्रम्, अशुद्धभावत्वादेव सदैवाऽकुशलबुद्धया तद्वीजाभावात् ॥ ३९ ॥

आयरिए नाराहेइ समणे आवि तारिसो ।
गिहत्था वि णं गरिहंति जेण जाणंति तारिसं ॥ ४० ॥

छा० आचार्यान्नाराधयति, श्रमणानपि तादृशः ।
गृहस्था अपि गर्हन्ते, येन जानन्ति तादृशम् ॥ ४० ॥

'आयरिए०'—आचार्यान्नाराधयति श्रमणांश्चाऽपि तादृशः, गृहस्था अप्येनं दुष्टशीलं गर्हन्ति (न्ते), येन जानन्ति तादृशं दुष्टशीलम् ॥ ४० ॥

एवं तु अगुणप्पेही गुणाणं च विवज्जओ ।
तारिसो मरणंते वि न आराहेइ संवरं ॥ ४१ ॥

छा० एवन्त्वगुणप्रेक्षी, गुणानां च विवर्जकः ।
तादृशो मरणान्तेऽपि, नाराधयति संवरम् ॥ ४१ ॥

'एवं तु०'–एव तुक्तेन प्रकारेणाऽगुणप्रेक्षी गुणाना चाऽप्रमादादीनां विवर्जकः, तादृशः क्लिष्टचित्तो मरणान्तेऽपि नाराधयति सवरम् ॥ ४१ ॥ यतश्चैवमत एतद्दोषपरिहारेण साधुः कीदृशः स्यादित्याह—

तवं कुव्वइ मेहावी पणीअं वज्जए रसं ।
मज्जप्पमायविरओ तवस्सी अइउक्कसो ॥ ४२ ॥

छा० तपः करोति मेधावी, प्रणीतं वर्जयेद्रसम् ।
मद्यप्रमादविरतः, तपस्व्यत्युत्कर्षः ॥ ४२ ॥

'तवं०'–तपः करोति मेधावी-मर्यादावर्ती, प्रणीत स्निग्धं वर्जयति रसम्, मद्यप्रमादविरतस्तपस्वी साधुरत्युत्कर्षः–अहन्तपस्वीत्युत्कर्षरहितः ॥ ४२ ॥



तस्स पस्सह कल्लाणं अणेगसाहुपूइअं ।
विउलं अत्थसंजुत्तं कित्तइस्सं सुणेह मे ॥ ४३ ॥

छा० तस्य पश्यत कल्याणम्, अनेकसाधुपूजितम् ।
विपुलमर्थसंयुक्तं, कीर्तयिष्ये शृणुत मत् ॥ ४३ ॥

'तस्स पस्सह०'—तस्येत्यम्भूतस्य पश्यत कल्याणं—गुणसम्पद्रूपम् (संयमं), अनेकसाधुपूजितम्, विपुलं—मोक्षावहत्वात्, अर्थसंयुक्तम्—अर्थतत्त्वतः कर्मनिर्जरारूपः, तेन संयुक्तं, कीर्तयिष्येऽहं शृणुत मम सकाशात् ॥ ४३ ॥

एवं तु गुणप्पेही अगुणाणं च विवज्जओ ।
तारिसो मरणंते वि आराहेइ संवरं ॥ ४४ ॥

छा० एवन्तु गुणप्रेक्षी, अगुणानां च विवर्जकः ।
तादृशो मरणान्तेऽपि, आराधयति संवरम् ॥ ४४ ॥

'एवं तु०'—एवन्तूक्तप्रकारेण गुणप्रेक्षी गुणान्—अप्रमादादीन् प्रेक्षते तच्छीलश्चेत्यर्थः, अगुणानां प्रमादादीनां विवर्जकः, अन्यत्पूर्ववत् ( तादृशः, आराधयति संवरमिति विशेषः ) ॥ ४४ ॥

आयरिए आराहेइ समणे आवि तारिसो ।
गिहत्था वि णं पूअंति जेण जाणंति तारिसं ॥ ४५ ॥

छा० आचार्यानाराधयति, श्रमणानपि तादृशः ।
गृहस्था अपि पूजयन्ति, येन जानन्ति तादृशम् ॥ ४५ ॥

'आयरिए०'–सुगमा ( विपर्ययतः ) ॥ ४५ ॥ स्तेनाऽधिकार एवेदमाह—

तवतेणे वयतेणे रूवतेणे अ जे नरे ।
आयारभावतेणे अ कुव्वइ देवकिव्विसं ॥ ४६ ॥

छा० तपस्तेनो वाक्स्तेनः, रूपस्तेनश्च यो नरः
आचारभावस्तेनश्च, करोति देवकिल्बिषम् ॥ ४६ ॥

'तवतेणे०'–तपःस्तेनो वाक्स्तेनो रूपस्तेनश्च यो नरः, कश्चिदाचारभावस्तेनश्च, पालयन्नपि क्रियां तथा भावदोषात्करोति देवकिल्बिषं-किल्बिषिकं कर्म निर्वर्चयतीत्यर्थः । तपस्तेनो नाम क्षपकरूपतुल्यः कश्चित्केनचित्पृष्टः–'त्वमसौ क्षपकः ?' इति, स पूजायर्थमाह–अहम्, अथवा वक्ति–'साधव एव क्षपकाः', तूष्णीं वाऽऽस्ते, एवं वाक्स्तेनो धर्मकथकादितुल्यरूपः कश्चित्केनचित्पृष्ट इति, एवं रूपस्तेनो राजपुत्रादितुल्यरूपः पृष्टः, एवमाचारस्तेनो विशिष्टाचारवत्तुल्यरूप इति, भावस्तेनस्तु परोत्प्रेक्षितं कथञ्चित्किञ्चिच्छ्रुत्वा स्वयमनुत्प्रेक्षितमपि मयैतत्प्रपञ्चेन चर्चितमित्याहेति ॥ ४६ ॥

लद्धूण वि देवत्तं उववण्णो देवकिव्विसे ।
तत्थावि से न याणाइ किं मे किच्चा इमं फलं ॥ ४७ ॥

१ 'किल्विषिकं कर्म' इति शुद्धः पाठः ।

छा० लब्ध्वाऽपि देवत्वम्, उपपन्नो देवाकिल्बिषे ।
तत्राऽपि स न जानाति, किं मे कृत्वेदं फलम् ॥ ४७ ॥

'लद्धूण वि०'—लब्ध्वाऽपि देवत्वम्, उपपन्नो देवकिल्बिषे—किल्बिषिककाये, तत्राऽप्यसौ न जानाति अविशुद्धाऽवधिना किं मम कृत्वेदं फलं किल्बिषिकदेवत्वम् ॥ ४७ ॥

तत्तो वि से चइत्ताणं लब्भइ एलमूअगं ।
नरगं तिरिक्खजोणिं वा बोही जत्थ सुदुल्लहा ॥ ४८ ॥

छा० ततोऽपि स च्युत्वा, लभते एडमूकताम् ।
नरकं तिर्यग्योनिं वा, बोधिर्यत्र सुदुर्लभः ॥ ४८ ॥

'तत्तो वि०'—ततोऽप्यसौ—देवलोकादसौ च्युत्वा लप्स्यते एल(ड)मूकतामजाभाषानुकारित्वं मानुषत्वे, तथा नरकं तिर्यग्योनिं वा पारम्पर्येण लप्स्यते, बोधिर्यत्र सुदुर्लभः—जिनधर्मप्राप्तिर्दुरापा यत्र तत्रोपपद्यते, इह च प्राप्नोत्येल(ड)मूकतामिति वाच्ये असकृत्–[१]भवे प्राप्तिख्यापनाय लप्स्यत इति भविष्यत्कालनिर्देश इति ॥ ४८ ॥
प्रकृतमुपसंहरति—

१ 'भावप्राप्ति' इति च पाठः ।

एअं च दोसं दट्ठूणं नायपुत्तेण भासिअं ।
अणुमायं पि मेहावी मायामोसं विवज्जए ॥ ४९ ॥
छा० एतं च दोषं दृष्ट्वा, ज्ञातपुत्रेण भाषितम् ।
अणुमात्रामपि मेधावी, मायामृषां विवर्जयेत् ॥ ४९ ॥

'एअं च०'—एव(त)ञ्च दोषमनन्तरोदितम्, सत्यपि श्रामण्ये कुदेवत्वादिप्राप्तिरूपम् आगमतः दृष्ट्वा, ज्ञातपुत्रेण भाषितमुक्तम्, अणुमात्रमपि—स्तोकमात्रमपि मेधावी मायामृषावादं विवर्जयेत् ॥ ४९ ॥ अध्ययनार्थमुपसंहरन्नाह—

सिक्खिऊण भिक्खेसणसोहिं संजयाण बुद्धाण सगासे ।
तत्थ भिक्खू सुप्पणिहिइंदिए तिव्वलज्जगुणवं विहरिज्जासि ॥५०॥ त्ति बेमि ।
छा० शिक्षित्वा भिक्षैषणाशोधिं, संयतेभ्यो बुद्धेभ्यः सकाशात् ।
तत्र भिक्षुः सुप्रणिहितेन्द्रियः, तीव्रलज्जागुणवान् विहरेत्[1] ॥५०॥ इति ब्रवीमि ।

'सिक्खिऊण०'—शिक्षित्वा—अधीत्य भिक्षैषणाशुद्धिं—पिण्डमार्गणादिविशुद्धिम्, उद्गमादिरूपां, संयतेभ्यो बुद्धेभ्यः सकाशात्, न द्रव्यसाधुभ्यः सकाशात्, तत्र—भिक्षैषणायां भिक्षुः सुप्रणिहितेन्द्रियः—श्रोत्रादिभिर्गाढं तदुपयुक्तः,



१ विहरिष्यसि ।

तीमिरन्नः—उत्कृष्टसंयमः सन्, अनेन प्रकारेण गुणवान्, विहरेत्—सामाचारीपालनं कुर्यादिति। ब्रवीमीति पूर्ववत् ॥ ५० ॥ इति पिण्डैषणाध्ययनाऽवचूरिः ।



॥ पिंडेसणाज्झयणं पंचमं ॥

॥ इति पिण्डैषणाऽध्ययनं पञ्चमम् ॥



## ॥ अथ षष्ठाऽध्ययनम् ॥





इहानन्तराऽध्ययने साधोर्भिक्षाशुद्धिरुक्ता, इह तु गोचरप्रविष्टेन सता स्वाचारः पृष्टेन तद्विदाऽपि न महाजनसमक्षं तत्रैव विस्तरतः कथयितव्य इति, अपित्वालये गुरवो वा कथयन्तीति वाच्यमित्येतदुच्यते—

नाणदंसणसंपण्णं संजमे अ तवे रयं ।
गणिमागमसंपण्णं उज्जाणम्मि समोसढं ॥ १ ॥

छा० ज्ञानदर्शनसम्पन्नं, संयमे च तपसि रतम् ।
गणिनमागमसम्पन्नम्, उद्याने समवसृतम् ॥ १ ॥

'नाणदंसण०'—ज्ञानदर्शनसम्पन्नं—ज्ञानदर्शनाभ्यां संपन्नं—संयुक्तं, संयमे तपसि च रतम्—आसक्तं, गणोऽस्याऽस्तीति गणी तं गणिनमाचार्यमागमसम्पन्नं—विशिष्टश्रुतधरं, बह्वागमत्वेन प्राधान्यख्यापनार्थमेतत्, उद्याने समवसृतं-स्थितं धर्मदेशनार्थं वा प्रवृत्तम् ॥ १ ॥



रायाणो रायमच्चा य माहणा अदुव खत्तिआ ।
पुच्छंति निहुअप्पाणो कहं भे आयारगोअरो ॥ २ ॥

छा० राजानो राजाऽमात्याश्च, ब्राह्मणा अथवा क्षत्रियाः ।
पृच्छन्ति निभृतात्मानः, कथं व(युष्माकम्) आचारगोचरः ॥ २ ॥

'रायाणो०'–राजानो राजाऽमात्याश्च ब्राह्मणा अथवा क्षत्रियाः पृच्छन्ति निभृताऽऽत्मानः–असम्भ्रान्ता रचिताऽञ्जलयः, कथं भे–भवताम् आचारगोचरः–क्रियाकलापः स्थितः (इति) ॥ २ ॥

तेसिं सो निहुओ दंतो सव्वभूअसुहावहो ।
सिक्खाए सुसमाउत्तो आयक्खइ विअक्खणो ॥ ३ ॥

छा० तेभ्यः स निभृतो दान्तः, सर्वभूतसुखावहः ।
शिक्षया सुसमायुक्तः, आख्याति विचक्षणः ॥ ३ ॥

'तेसिं०'–[चतुर्थ्यर्थे षष्ठी] तेभ्यो राजादिभ्योऽसौ गणी, निभृतः-असम्भ्रान्तः, दान्तः–इन्द्रियनोइन्द्रिय-दमाभ्यां, सर्वभूतसुखावहः–सर्वप्राणिहित इत्यर्थः, शिक्षया–ग्रहणाऽऽसेवनरूपया सुसमायुक्तः–सुष्ठु एकीभावेन युक्तः, आख्याति विचक्षणः ॥ ३ ॥

हंदि ! धम्मत्थकामाणं निग्गंथाणं सुणेह मे ।
आयारगोअरं भीमं सयलं दुरहिट्ठिअं ॥ ४ ॥

छा० हन्त ! धर्मार्थकामानां, निर्ग्रन्थानां शृणुत मत् ।
आचारगोचरं भीमं, सकलं दुरधिष्ठितम् ॥ ४ ॥

'हंदि०'–हन्दीत्युपप्रदर्शने, धर्मार्थकामानां–धर्मश्चारित्रधर्मः, तस्यार्थः–प्रयोजनं (मोक्षः), तं कामयन्ते–इच्छन्ति विशुद्धविहिताऽनुष्ठानकरणेनेति धर्मार्थकामाः, तेषां, निर्ग्रन्थानां–बाह्याऽभ्यन्तरग्रन्थरहितानां, शृणुत मम समीपाद् आचारगोचरं–क्रियाकलापम्, भीमं–कर्मशत्रुपेक्षया रौद्रम्, दुरधिष्ठितं–क्षुद्रसत्त्वैर्दुराश्रयम् ॥ ४ ॥

नण्णत्थ एरिसं वुत्तं जं लोए परमदुच्चरं ।
विउलट्ठाणभाइस्स न भूअं न भविस्सइ ॥ ५ ॥

छा० नाऽन्यत्र–ईदृशमुक्तं, यल्लोके परमदुश्चरम् ।
विपुलस्थानभागिनः, न भूतं न भविष्यति ॥ ५ ॥

'नण्णत्थ०'–नाऽन्यत्र कपिलादिषु ईदृशमाचारगोचरं वस्तु यल्लोके परमदुश्चरम्–अत्यन्तदुष्करम्, विपुलस्थानभाजि(गि)नः-विपुलस्थानं–विपुलमोक्षहेतुत्वात्संयमोऽपि विपुलस्थानं तदाऽऽसेविनः, न भूतं न भविष्यति जिनमतादन्यत्र ॥ ५ ॥

सखुड्डगवियत्ताणं वाहिआणं च जे गुणा ।
अखंडफुडिआ कायव्वा तं सुणेह जहा तहा ॥ ६ ॥

छा० सक्षुल्लकव्यक्तानां, व्याधितानां च ये गुणाः ।
अखण्डाऽस्फुटिताः कर्तव्याः, तान्–शृणुत यथा तथा ॥ ६ ॥

छा० राजानो राजाऽमात्याश्च, ब्राह्मणा अथवा क्षत्रियाः ।
पृच्छन्ति निभृतात्मानः, कथं व(युष्माकम्) आचारगोचरः ॥ २ ॥

'रायाणो०'–राजानो राजाऽमात्याश्च ब्राह्मणा अथवा क्षत्रियाः पृच्छन्ति निभृताऽऽत्मानः–असम्भ्रान्ता रचिताऽञ्जलयः, कथं भे–भवताम् आचारगोचरः–क्रियाकलापः स्थितः (इति) ॥ २ ॥

तेसिं सो निहुओ दंतो सव्वभूअसुहावहो ।
सिक्खाए सुसमाउत्तो आयक्खइ विअक्खणो ॥ ३ ॥

छा० तेभ्यः स निभृतो दान्तः, सर्वभूतसुखावहः ।
शिक्षया सुसमायुक्तः, आख्याति विचक्षणः ॥ ३ ॥

'तेसिं०'–[चतुर्थ्यर्थे षष्ठी] तेभ्यो राजादिभ्योऽसौ गणी, निभृतः-असम्भ्रान्तः, दान्तः–इन्द्रियनोइन्द्रियदमाभ्यां, सर्वभूतसुखावहः–सर्वप्राणिहित इत्यर्थः, शिक्षया–ग्रहणाऽऽसेवनरूपया सुसमायुक्तः–सुष्ठु एकीभावेन युक्तः, आख्याति विचक्षणः ॥ ३ ॥

हंदि ! धम्मत्थकामाणं निग्गंथाणं सुणेह मे ।
आयारगोअरं भीमं सयलं दुरहिट्ठिअं ॥ ४ ॥

छा० हन्त ! धर्मार्थकामानां, निर्ग्रन्थानां शृणुत मत् ।
आचारगोचरं भीमं, सकलं दुरधिष्ठितम् ॥ ४ ॥

'हंदि०'–हन्दीत्युपप्रदर्शने, धर्मार्थकामानां–धर्मश्चारित्रधर्मः, तस्यार्थः–प्रयोजनं (मोक्षः), तं कामयन्ते–इच्छन्ति विशुद्धविहिताऽनुष्ठानकरणेनेति धर्मार्थकामाः, तेषां, निर्ग्रन्थानां–बाह्याऽभ्यन्तरग्रन्थरहितानां, शृणुत मम समीपाद् आचारगोचरं–क्रियाकलापम्, भीमं–कर्मशत्र्वपेक्षया रौद्रम्, दुरधिष्ठितं–क्षुद्रसत्त्वैर्दुराश्रयम् ॥ ४ ॥

**नण्णत्थ एरिसं वुत्तं जं लोए परमदुच्चरं ।**
**विउलट्ठाणभाइस्स न भूअं न भविस्सइ ॥ ५ ॥**

छा० **नाऽन्यत्र–ईदृशमुक्तं, यल्लोके परमदुश्चरम् ।**
**विपुलस्थानभागिनः, न भूतं न भविष्यति ॥ ५ ॥**

'नण्णत्थ०'–नाऽन्यत्र कपिलादिषु ईदृशमाचारगोचरं वस्तु यल्लोके परमदुश्चरम्–अत्यन्तदुष्करम्, विपुलस्थानभाजि(गि)नः-विपुलस्थानं–विपुलमोक्षहेतुत्वात्संयमोऽपि विपुलस्थानं तदाऽऽसेविनः, न भूतं न भविष्यति जिनमतादन्यत्र ॥ ५ ॥

**सखुड्डगवियत्ताणं वाहिआणं च जे गुणा ।**
**अखंडफुडिआ कायव्वा तं सुणेह जहा तहा ॥ ६ ॥**

छा० **सक्षुल्लकव्यक्तानां, व्याधितानां च ये गुणाः ।**
**अखण्डाऽस्फुटिताः कर्तव्याः, तान्–शृणुत यथा तथा ॥ ६ ॥**

'सखुड्ग०'–सह क्षुल्लकैर्द्रव्यभावबालैर्ये वर्तन्ते ते, व्यक्ताः–द्रव्यभाववृद्धाः, तेषां सक्षुल्लकव्यक्तानां–सबालवृद्धानामित्यर्थः, व्याधिमतां, 'च'–शब्दाद्व्याधिमतां च, ये गुणा वक्ष्यमाणलक्षणास्तेऽखण्डाऽस्फुटिताः कर्तव्याः, अखण्डाः–देशविराधनापरित्यागेन, अस्फुटिताः–सर्वविराधनापरित्यागेन, तान्–शृणुत यथा कर्तव्यास्तथा ॥ ६ ॥ ते चाऽगुणपरिहारेण अखण्डाऽस्फुटिता भवन्तीत्यगुणास्तावदुच्यन्ते—



दसअट्ठ य ठाणाइं जाइं बालोव(वि)रज्झइ ।
तत्थ अण्णयरे ठाणे निग्गंथत्ताउ भस्सइ ॥ ७ ॥
छा० दशाष्टौ च स्थानानि, यानि बालोऽप(वि)राध्यति ।
तत्रान्यतरस्मिन् स्थाने, निर्ग्रन्थत्वाद्भ्रश्यति ॥ ७ ॥

'दसअट्ठ०'[1]–दश अष्टौ च स्थानानि वक्ष्यमाणलक्षणानि यान्याश्रित्य बालोऽपराध्यति–तत्सेवनयाऽपराधमाप्नोति, कथम्? आह–तत्राऽन्यतरस्थाने वर्तमानः प्रमादेन निर्ग्रन्थत्वाद् भ्रश्यति ॥ ७ ॥ कानि तानि स्थानानि ? इत्याह—

वयछक्कं ६ कायछक्कं १२ अकप्पो १३ गिहिभायणं १४ ।
पलिअंकनिसिज्जा य १६ सिणाणं १७ सोभवज्जणं १८ ॥ ८ ॥
छा० व्रतषट्कं कायषट्कम्, अकल्पो गृहिभाजनम् ।
पर्यङ्कनिषद्ये च, स्नानं शोभावर्जनम् ॥ ८ ॥



१ वृत्तौ न व्याख्याता, निर्युक्तिगतेति स्वीकरणात् ।

'वयछक्कं०'–व्रतषट्कं–प्राणातिपातविरमणादीनि षड्व्रतानि ६, कायषट्कं–पृथिव्यादयः षड्जीवनिकायाः १२, अकल्पकः–शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः १३, गृहिभाजनं–कांस्यभाजनादि १४, पर्यङ्कः–शयनविशेषः १५, निषद्या च–गृहे-एकानेकरूपा १६, स्नानं–सर्वदेशभेदभिन्नम् १७, शोभावर्जनं–विभूषापरित्यागः १८, वर्जनमिति प्रत्येकं सम्बध्यते, निर्युक्तिगता गाथेयम् ॥ ८ ॥ गुणा अखण्डाऽस्फुटिताः कर्तव्याः, तत्र विधिमाह—

तत्थिमं पढमं ठाणं महावीरेण देसिअं ।
अहिंसा निउणा दिट्ठा सव्वभूएसु संजमो ॥ ९ ॥
छा० तत्रेदं प्रथमं स्थानं, महावीरेण देशितम् ।
अहिंसा निपुणा दृष्टा, सर्वभूतेषु संयमः ॥ ९ ॥

'तत्थिमं०'–तत्रेदं प्रथमं वक्ष्यमाणलक्षणं(स्थानं) महावीरेण–श्रीवर्द्धमानेन देशितं–कथितम्, यदुत-अहिंसेति, इयञ्च सामान्यतः प्रभूनैर्देशितेत्यत आह–'निपुणाः'–आधाकर्माद्यपरिभोगतः कृतकारितादिपरिहारेण सूक्ष्मा, नाऽऽगमद्वारेण देशिता अपि तु दृष्टा, साक्षाद्धर्मसाधनत्वेनोपलब्धा, किमितीयमेव निपुणेत्याह–यतोऽस्यामेव महावीरदेशितायां सर्वभूतेषु–सर्वभूतविषयः संयमः, नान्यत्र, उद्दिश्यकृतादिभोगविधानात् ॥ ९ ॥

जावंति लोए पाणा तसा अदुव थावरा ।
ते जाणमजाणं वा न हणे णो वि घायए ॥ १० ॥

छा० यावन्तो लोके प्राणिनः, त्रसा अथवा स्थावराः।
ताञ्जानन्नजानन्वा, न हन्यान्नो अपि घातयेत् ॥ १० ॥

'जावंति०'—यतो हि भागवत्याज्ञा यावन्तो लोके प्राणिनस्त्रसाः—द्वीन्द्रियादयः, अथवा स्थावराः—पृथिव्यादयस्तान् जानन्—रागाद्यभिभूतोऽजानन् वा, न हन्यात् स्वयम्, नाभिघातयेदन्यैः, एकग्रहणतो घ्नतोऽप्यन्यान् न समनुजानीयात् ॥ १० ॥

सव्वे जीवा वि इच्छंति जीविउं न मरिज्जिउं।
तम्हा पाणवहं घोरं निग्गंथा वज्जयंति णं ॥ ११ ॥

छा० सर्वे जीवा अपीच्छन्ति, जीवितुं न मर्तुम्।
तस्मात्प्राणवधं घोरं, निर्ग्रन्था वर्जयन्ति ॥ ११ ॥

'सव्वे जीवा०'—सर्वे जीवा अपीच्छन्ति जीवितुं न मर्तुम् प्राणवल्लभत्वात्, यस्मादेवं तस्मात्प्राणवधं घोरं निर्ग्रन्था वर्जयन्ति ॥ ११ ॥ द्वितीयस्थानविधिमाह—

अप्पणट्ठा परट्ठा वा कोहा वा जइ वा भया।
हिंसगं न मुसं बूआ, णो वि अण्णं वयावए ॥ १२ ॥

छा० आत्मार्थं परार्थं वा, क्रोधाद्वा यदिवा भयात्।
हिंसकं न मृषा ब्रूयात्, नो अप्यन्यं वादयेत् ॥ १२ ॥

'अप्पणट्ठा०'–आत्मार्थम्–अग्लान एव ग्लानोऽहं ममानेन कार्यमित्यादि, (परार्थं वा–एवमेव, तथा कोपाद्वा–त्वं दास इत्यादि), [एकग्रहणे तज्जातीयग्रहणात्] मायादिपरिग्रहः, यदि वा भयात्किञ्चिद्वितथं कृत्वा प्रायश्चित्तमपान्न घृतमित्यादि, एवं हास्यादिष्वपि वाच्यम्, हिंसकं–परपीडाकारि सर्वमेव न मृषा ब्रूयात् स्वयम्, नाऽप्यन्यं वादयेत्, एकग्रहणतो ब्रुवतोऽप्यन्यान्न समनुजानीयात् ॥ १२ ॥

मुसावाओ अ लोगंमि सव्वसाहूहिं गरिहिओ ।
अविस्सासो अ भूआणं तम्हा मोसं विवज्जए ॥ १३ ॥

छा० मृषावादश्च लोके, सर्वसाधुभिर्गर्हितः ।
अविश्वासश्च भूतानां, तस्मान्मृषां विवर्जयेत् ॥ १३ ॥

'मुसावाओ०'–मृषावादो हि लोके सर्वसाधुभिर्गर्हितः, सर्वव्रतापकारित्वात्, प्रतिज्ञाताऽपालनात्, अविश्वासश्च भूतानां, तस्मान्मृषावादं वर्जयेत् ॥ १३ ॥ अथ तृतीयस्थानमाह–

चित्तमंतमचित्तं वा अप्पं वा जइ वा बहुं ।
दंतसोहणमित्तं पि उग्गहंसि अजाइआ ॥ १४ ॥

छा० चित्तवदचित्तं वा, अल्पं वा यदि वा बहु ।
दन्तशोधनमात्रमपि, अवग्रहे अयाचित्वा ॥ १४ ॥

'चित्तमंत०'–चित्तवद्–द्वीन्द्रियादि, अचित्तवद्वा–हिरण्यादि, अल्पं वा मूल्यतः प्रमाणतश्च, यदिवा बहु मूल्यप्रमाणाभ्यामेव, किं बहुना ? दन्तशोधनमात्रमपि अवग्रहे यस्य तत्तमयाचित्वा न गृह्णन्ति साधवः कदाचन ॥१४॥

तं अप्पणा न गिण्हंति णो वि गिण्हावए परं ।
अण्णं वा गिण्हमाणं पि नाणुजाणंति संजया ॥ १५ ॥

छा० तदात्मना न गृह्णन्ति, नो अपि ग्राहयन्ति परम् ।
अन्यं वा गृह्णन्तमपि, नाऽनुजानन्ति संयताः ॥ १५ ॥

'तं अप्पणा०'–तदाऽऽत्मना स्वयं न गृह्णन्ति, विरतत्वात्, नाऽपि ग्राहयन्ति परम्, अन्यं वा गृह्णन्तमपि नानुजानन्ति–नानुमन्यन्ते संयताः ॥ १५ ॥ चतुर्थस्थानविधिमाह—

अबंभचरिअं घोरं पमायं दुरहिट्ठिअं ।
नायरंति मुणी लोए भेआययणवज्जिणो ॥ १६ ॥

छा० अब्रह्मचर्यं घोरं, प्रमादं दुरधिष्ठितम् ।
नाचरन्ति मुनयो लोके, भेदाऽऽयतनवर्जिनः ॥ १६ ॥

'अबंभ०'–अब्रह्मचर्यं घोरं दुर्गतिहेतुत्वात्, प्रमादं–प्रमादवत्सर्वप्रमादमूलत्वात्, दुराश्रयं–दुस्सेवं, विदितजिनवचनेन अनन्तसंसारहेतुत्वात्, यतश्चैवमतो नाचरन्ति मुनयो लोके भेदायतनवर्जिनः–भेदश्चारित्रभेदः, तदाऽऽयतनं तत्स्थानमिदमेव, उक्तन्यायात्, तद्वर्जिनः–चारित्राऽतिचारभीरव इति ॥ १६ ॥

मूलमेअमहम्मस्स महादोससमुस्सयं ।
तम्हा मेहुणसंसग्गं निग्गंथा वज्जयंति णं ॥ १७ ॥
छा० मूलमेतदधर्मस्य, महादोषसमुच्छ्रयम् ।
तस्मान्मैथुनसंसर्गं, निर्ग्रन्था वर्जयन्ति ॥ १७ ॥

'मूलमेअ०'–मूलं–बीजमेतदधर्मस्य–पापस्येति पारलौकिकोऽपायः, महादोषसमुच्छ्रयं–महतां दोषाणां चौर्यप्रवृत्त्यादीनां समुच्छ्रयं–संघातवदिति–ऐहिकोऽपायः, तस्मान्मैथुनसंसर्गं योषिदालापाद्यपि निर्ग्रन्था वर्जयन्ति, 'णं' इति वाक्यालङ्कारे ॥ १७ ॥ अथ पञ्चमस्थानविधिमाह—

बिडमुब्भेइमं लोणं तिल्लं सप्पिं च फाणिअं ।
न ते संनिहिमिच्छंति नायपुत्तवओरया ॥ १८ ॥
छा० विडमुद्भेद्यं लवणं, तैलं सर्पिश्च फाणितम् ।
न ते सन्निधिमिच्छन्ति, ज्ञातपुत्रवचोरताः ॥ १८ ॥

'बिड०'–बिडं–गोमूत्रादिपक्वम्, उद्भेद्यं–सामुद्रादि, यदिवा बिडं प्रासुकम्, उद्भेद्यमप्रासुकम्, इत्येवं द्विप्रकारं लवणं, तैलं, सर्पिश्च–घृतं, फाणितं–द्रवगुडः, न ते साधवः सन्निधिमिच्छन्ति ज्ञातपुत्रवचोरताः–ज्ञातनिबद्धार्थः सिद्धार्थस्तत्पुत्रो वर्धमानस्तस्य वचसि रताः ॥ १८ ॥ सन्निधिदोषमाह—

लोहस्सेसणुप्फासो मण्णे अण्णयरामवि ।
जे सिआ संनिहिं कामे, गिही पव्वइए न से ॥ १९ ॥
छा० लोभस्यैषोऽनुस्पर्शः, मन्येऽन्यतरामपि ।
यः स्यात्सान्निधिं कामयते, गृही प्रव्रजितो न सः ॥ १९ ॥

'लोहस्सेस०'—लोभस्यैषोऽनुस्पर्शोऽनुभावो यदुत (यदे)तत्सन्निधिकरणमिति, यतश्चैवमतो मन्ये—मन्यन्ते [प्राकृतशैल्या एकवचनम्] एवमाहुस्तीर्थकरगणधराः, अन्यतरामपि—स्तोकामपि यः कदाचित् सन्निधिं कामयते गृही-गृहस्थोऽसौ भावतः प्रव्रजितो नेति, दुर्गतिनिमित्ताऽनुष्ठानप्रवृत्तेः ॥ १९ ॥ आह—यद्येवं, वस्त्रादिधारयतां साधूनां कथमसन्निधिरित्यत्राह—

जं पि वत्थं व पायं वा कंबलं पायपुंछणं ।
तं पि संजमलज्जट्ठा धारंति परिहरंति अ ॥ २० ॥
छा० यदपि वस्त्रं वा पात्रं वा, कम्बलं पादप्रोञ्छनम् ।
तदपि संयमलज्जार्थं, धारयन्ति परिहरन्ति च ॥ २० ॥

'जं पि०'—यदपि आगमोक्तं वस्त्रं वा, पात्रं वा, कम्बलं, पादप्रुञ्छनं तदपि संयमलज्जार्थमिति, संयमार्थं पात्रादि, तदव्यतिरेकेण पुरुषमात्रेण गृहस्थभाजने सति संयमपालनाभावात्, लज्जार्थं वस्त्रं, तदव्यतिरेकेण—अङ्गनादौ

विशिष्टश्रुतपरिणत्यादिरहितस्य निर्लज्जतोपपत्तेः, पुष्टालम्बनविधानेन परिहरन्ति च-परिभुञ्जते च मूर्च्छादिरहिताः ॥ २० ॥ अतो नाऽसौ परिग्रहः—

न सो परिग्गहो वुत्तो नायपुत्तेण ताइणा ।
मुच्छा परिग्गहो वुत्तो इअ वुत्तं महेसिणा ॥ २१ ॥
छा० नाऽसौ परिग्रह उक्तः, ज्ञातपुत्रेण त्रायिणा ।
मूर्च्छा परिग्रह उक्तः, इत्युक्तं महर्षिणा ॥ २१ ॥

'न सो परिग्गहो०'—नाऽसौ वस्त्रधारणादिलक्षणः परिग्रह उक्तो ज्ञातपुत्रेण—वर्द्धमानेन, त्रात्रा—स्वपरपरित्राणसमर्थेन, अपि तु मूर्च्छा—असत्स्वपि वस्त्रादिष्वभिष्वङ्गः परिग्रह उक्तः, बन्धहेतुत्वात्, अर्थतस्तीर्थकरेण ब्रतोऽवधार्य इत्येवमुक्तं महर्षिणा गणधरेण, सूत्रे शय्यम्भवेन (शायम्भवे) ॥ २१ ॥ वस्त्राद्यभावेऽपि मूर्च्छा स्यात्, सद्भावे कथं नेत्याह—

सव्वत्थुवहिणा बुद्धा संरक्खणपरिग्गहे ।
अवि अप्पणो वि देहम्मि नायरंति ममाइअं ॥ २२ ॥
छा० सर्वत्रोपधिना बुद्धाः, संरक्षणपरिग्रहे ।
अप्यात्मनोऽपि देहे, नाचरन्ति ममायितम् ॥ २२ ॥

'सव्वत्थु०'–सर्वत्रोचिते क्षेत्रे काले(च) उपधिना–आगमोक्तेन वस्त्रादिना सहाऽपि बुद्धाः–ज्ञाततत्त्वाः, संरक्षणपरिग्रह इति संरक्षणाय षण्णां जीवनिकायानां वस्त्रादिपरिग्रहे सत्यपि नाचरन्ति ममत्वमिति योगः । किञ्चानेन ? ते हि भगवन्तः 'अप्यात्मनोऽपि देहे'–आत्मनो देहे-इत्यात्मनो धर्मकायेऽपि विशिष्टप्रतिबन्धसङ्गतिं न कुर्वन्ति, ममत्वमाऽऽत्मीयाऽभिधानं, वस्तुतत्त्वावबोधात्, तिष्ठतु तावदन्यत्, ततश्च देहवदपरिग्रह एव तदिति ॥ २२ ॥ अथ षष्ठं स्थानमाह—

अहो निच्चं तवोकम्मं सव्वबुद्धेहिं वण्णिअं ।
जा य लज्जासमा वित्ती एगभत्तं च भोअणं ॥ २३ ॥

छा० अहो नित्यं तपःकर्म, सर्वबुद्धैर्वर्णितम् ।
या च लज्जासमा वृत्तिः, एकभक्तं च भोजनम् ॥ २३ ॥

'अहो०'–'अहो नित्यं तपःकर्म'–इत्यहो विस्मये, नित्यं नामाऽपायाऽभावेन तदन्यगुणवृद्धिसम्भवात्, अप्रतिपात्येव तपःकर्म–तपोऽनुष्ठानं सर्वबुद्धैर्वर्णितं–देशितं, 'या च लज्जासमा वृत्तिः'–लज्जा–संयमः, तेन समा-तुल्या संयमाऽविरोधिनीत्यर्थः, वर्तनं–वृत्तिः–देहपालना, एकभक्तं च भोजनम्–एकं भक्तं द्रव्यतो भावतश्च यस्मिन्भोजने तत्तथा, द्रव्यत एकम्–एकसंख्यानुगतं, भावत एकं–कर्मबन्धाभावादद्वितीयं, तद्दिवस एव रागादिरहितस्य, अन्यथा भावत एकत्वाऽभावात् ॥ २३ ॥ रात्रिभोजनदोषमाह—

संतिमे सुहुमा पाणा तसा अदुव थावरा ।
जाइं राओ अपासंतो कहमेसणिअं चरे ? ॥ २४ ॥
छा० सन्तीमे सूक्ष्माः प्राणिनः, त्रसा अथवा स्थावराः ।
यान्रात्रावपश्यन्, कथमेषणीयं चरेत् ? ॥ २४ ॥

'संतिमे०'—सन्त्येते प्रत्यक्षाः सूक्ष्माः—सूक्ष्मप्राणिनो जीवाः, त्रसाः—द्वीन्द्रियादयः, (वा)स्थावराः पृथिव्यादयः, यान् प्राणिनो रात्रावपश्यन् कथमेषणीयं चरिष्यति—भोक्ष्यते च ? असम्भव एव रात्रावेषणीयचरणस्येति ॥२४॥ रात्रिभोजने दोषमभिधायाऽधुना ग्रहणगतं दोषमाह—

उदउल्लं बीअसंसत्तं पाणा निवडिआ महीं ।
दिआ ताइं विवज्जिज्जा राओ तत्थ कहं चरे ? ॥ २५ ॥
छा० उदकार्द्रं बीजसंसक्तं, प्राणिनो निपतिता महीम् ।
दिवा तान्विवर्जयेत्, रात्रौ तत्र कथं चरेत् ? ॥ २५ ॥

'उदउल्लं०'—उदकार्द्रं पूर्ववद्बीजसंसक्तं भक्तादि, (तथा) प्राणिनः सम्पातिमादयो निपातिमौ महां



१ प्राकृतत्वान्नपुंसकलिङ्गम् । समुच्चयार्थे वा । २ 'निपतिताः' इति शुद्धं ।

सम्भवन्ति, ननु दिवाऽप्येतत्सम्भवत्येव ? सत्यम्, किन्तु परलोकभीरुश्चक्षुषा पश्यन् दिवा तानि—उदकादीनि विवर्जयेत्, सम्भवत्येतत्, रात्रौ तु तत्र कथञ्चरन्ति संयमानुपरोधेन ? असम्भव एव शुद्धचरणस्य ॥ २५ ॥

एअं च दोसं दट्ठूणं नायपुत्तेण भासिअं ।
सव्वाहारं न भुंजंति निग्गंथा राइभोअणं ॥ २६ ॥
छा० एतं च दोषं दृष्ट्वा, ज्ञातपुत्रेण भाषितम् ।
सर्वाहारं न भुञ्जते, निर्ग्रन्था रात्रिभोजनम् ॥ २६ ॥

'एअं च०'—एन(त)मानन्तरोदितं प्राणिहिंसारूपमनर्थं चाऽऽत्मविराधनादिलक्षणं दोषं दृष्ट्वा (ज्ञातपुत्रेण भाषितं) सर्वाहारम्—अशनादिलक्षणं न भुञ्जते निर्ग्रन्था रात्रिभोजनम् ॥ २६ ॥ उक्तं व्रतषट्कं, कायषट्कमुच्यते—

पुढवीकायं न हिंसंति मणसा वयसं कायसा ।
तिविहेण करणजोएण संजया सुसमाहिआ ॥ २७ ॥
छा० पृथ्वीकायं न हिंसन्ति, मनसा वचसा कायेन ।
त्रिविधेन करणयोगेन, संयताः सुसमाहिताः ॥ २७ ॥

१ छान्दसत्वाद्ध्रस्वत्वम् ।

'पुढवीकायं०'—पृथिवीकायं न हिंसन्ति, आलेखनादिप्रकारेण मनसा वाचा कायेन, उपलक्षणमेतत्, अत एवाह—त्रिविधेन करणयोगेन—मनःप्रभृतिकरणादिरूपेण, संयताः सुसमाहिताः ॥ २७ ॥ हिंसादोषमाह—

पुढवीकायं विहिंसंतो हिंसइ उ तयस्सिए ।
तसे अ विविहे पाणे चक्खुसे अ अचक्खुसे ॥ २८ ॥
छा० पृथ्वीकायं विहिंसन्, हिनस्ति तु(एव) तदाश्रितान् ।
त्रसाँश्च विविधान्प्राणिनः, चाक्षुषाँश्चाऽचाक्षुषान् ॥ २८ ॥

'पुढवी०'—पृथ्वीकायं विहिंसन् हिनस्त्येव, तुरवधारणे, तदाश्रितान्—पृथिव्याश्रितान् त्रसांश्च विविधान् प्राणिनो द्वीन्द्रियादीन्, 'च'—शब्दात् स्थावरांश्च, चाक्षुषाननचाक्षुषांश्च ॥ २८ ॥

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं ।
पुढवीकायसमारंभं जावज्जीवाइ वज्जए ॥ २९ ॥
छा० तस्मादेतं विज्ञाय, दोषं दुर्गतिवर्धनम् ।
पृथ्वीकायसमारम्भं, यावज्जीवं वर्जयेत् ॥ २९ ॥



'तम्हा०'—तस्मादेवं विज्ञाय दोषं दुर्गतिवर्द्धनं पृथिवीकायसमारम्भं यावज्जीवमेव वर्जयेत् ॥ २९ ॥ अथाऽष्टमस्थानमाह—

आउकायं न हिंसंति मणसा वयसं कायसा ।
तिविहेण करणजोएण संजया सुसमाहिआ ॥ ३० ॥

छा० अप्कायं न हिंसन्ति, मनसा वचसा कायेन ।
त्रिविधेन करणयोगेन, संयताः सुसमाहिताः ॥ ३० ॥

आउकायं विहिंसंतो हिंसइ उ तयस्सिए ।
तसे अ विविहे पाणे चक्खुसे अ अचक्खुसे ॥ ३१ ॥

छा० अप्कायं विहिंसन्, हिनस्ति तु(एव) तदाश्रितान् ।
त्रसाँश्च विविधान्प्राणिनः, चाक्षुषाँश्चाऽचाक्षुषान् ॥ ३१ ॥

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं ।
आउकायसमारंभं जावज्जीवाइ वज्जए ॥ ३२ ॥

छा० तस्मादेतं विज्ञाय, दोषं दुर्गतिवर्धनम् ।
अप्कायसमारम्भं, यावज्जीवं वर्जयेत् ॥ ३२ ॥

'आउकाय०'—सुगमा, पृथिव्याः स्थानेऽप्[1]कायाऽभिलापेन नेयम् ॥ ३० ॥ 'आउकायं०'—सुगमा ॥३१॥ 'तम्हा०'—सुगमा, पूर्ववत् ॥ ३२ ॥ अथ नवमस्थानमाह—



१ पूर्ववत् ।

जायतेअं न इच्छंति पावगं जलइत्तए ।
तिक्खमण्णयरं सत्थं सव्वओ वि दुरासयं ॥ ३३ ॥

छा० जाततेजसं नेच्छन्ति, पापकं ज्वालयितुम् ।
तीक्ष्णमन्यतरच्छस्त्रं, सर्वतोऽपि दुराश्रयम् ॥ ३३ ॥

'जायतेअं०'—जाततेजसम्—अग्निं, नेच्छन्ति पापमेव पापकं, प्रभूतसत्त्वापकारित्वेनाऽशुभमित्यर्थः, ज्वलयितुम्—उत्पादयितुं तीक्ष्णं—छेदकरणात्मकम् अन्यतरच्छस्त्रं—सर्वत्रशस्त्रम्—एकधारादिशस्त्रव्यवच्छेदेन सर्वतो धारादि-(पार)शस्त्रकल्पमिति । अत एव सर्वतोऽपि दुराश्रयं—सर्वतोधारत्वेन अनाश्रयणीयम् ॥ ३३ ॥

पाईणं पडिणं वा वि उड्ढं अणुदिसामवि ।
अहे दाहिणओ वा वि दहे उत्तरओ वि अ ॥ ३४ ॥

छा० प्राच्यां प्रतीच्यां वाऽपि, ऊर्ध्वमनुदिक्ष्वपि ।
अधो दक्षिणतो वाऽपि, दहेदुत्तरतोऽपि च ॥ ३४ ॥

'पाईणं०'—प्राच्यां—पूर्वायां, प्रतीच्यामपि—पश्चिमायामपि, ऊर्ध्वम्, अनुदिक्ष्वपि [सुपां सुपो भवन्तीति सप्तम्यर्थे षष्ठी] विदिक्ष्वपि—इत्यर्थः, अधो दक्षिणतश्चाऽपि दहति—दाह्यं भस्मीकरोति, उत्तरतोऽपि च ॥ ३४ ॥

भूआणमेसमाघाओ हव्ववाहो न संसओ ।
तं पईवपयावट्ठा संजया किंचि नारभे ॥ ३५ ॥

छा० भूतानामेष आघातः, हव्यवाहो न संशयः ।
तं प्रदीपप्रतापार्थं, संयताः किञ्चिन्नारभन्ते ॥ ३५ ॥

'भूआणमेस०'—भूतानां—स्थावरादीनामेष आघातः—आघातहेतुत्वादाघातः, हव्यवाहोऽग्निर्न संशयः । इत्येवमेवैतदाघात एवेति भावः, येनैवं तेन तं हव्यवाहं प्रदीपप्रतापनार्थम्—आलोकशीतापनोदार्थं संयताः किञ्चित्संघट्टनादि(नाऽपि) नारभन्ते, संयतत्वापगमनप्रसङ्गात् ॥ ३५ ॥

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं ।
तेउकायसमारंभं जावज्जीवाइ वज्जए ॥ ३६ ॥

छा० तस्मादेतं विज्ञाय, दोषं दुर्गतिवर्धनम् ।
तेजःकायसमारम्भं, यावज्जीवं वर्जयेत् ॥ ३६ ॥

'तम्हा०'—सुगमा ॥ ३६ ॥ अथ दशमस्थानमाह—

अणिलस्स समारंभं बुद्धा मण्णंति तारिसं ।
सावज्जबहुलं चेअं नेअं ताईहिं सेविअं ॥ ३७ ॥



१ प्रतीप इत्यपि ।

छा० अनिलस्य समारम्भं, बुद्धा मन्यन्ते तादृशम् ।
सावद्यबहुलं चैतं, नैनं त्रायिभिः सेवितम् ॥ ३७ ॥

'अणिलस्स०'—अनिलस्य—वायोः समारम्भं—तालवृन्तादिभिः करणं बुद्धा मन्यन्ते तादृशम्—जाततेजः-समारम्भसदृशं सावद्यबहुलं चैनं(तं)—पापभूयिष्ठं चैनमिति कृत्वा सर्वकालमेव नैनं त्रातृभिः—सुसाधुभिः सेवितमाचरितं मन्यन्ते बुद्धाः ॥ ३७ ॥

तालिअंटेण पत्तेण साहाविहुअणेण वा ।
न ते वीइउमिच्छंति वेआवेऊण(उं) वा परं ॥ ३८ ॥

छा० तालवृन्तेन पत्रेण, शाखाविधुननेन वा ।
न ते व्यजितुमिच्छन्ति, व्याजयितुं वा परम् ॥ ३८ ॥

'तालिअंटेण०'—तालवृन्तेन पत्रेण शाखाविधुननेन वा न ते साधवो वीजितुमिच्छन्ति आत्मानमात्मना, नाऽपि वीजयन्ते परैरात्मानं तालवृन्तादिभिः, एवं नाऽपि वीजयन्तं परमनुमन्यन्ते ॥ ३८ ॥

जं पि वत्थं व पायं वा कंबलं पायपुंछणं ।
न ते वायमुईरंति जयं परिहरंति अ ॥ ३९ ॥



१ 'व्यजितुम्' इति शुद्धरूपम् ।

छा० यदपि वस्त्रं वा पात्रं वा, कम्बलं पादप्रोञ्छनम् ।
न ते वातमुदीरयन्ति, यतं परिहरन्ति च ॥ ३९ ॥

'जं पि०'—यदपि वस्त्रं वा पात्रं वा कम्बलं वा पादपुञ्छनम्, अमीषा पूर्वोक्तं धर्मोपकरणं, तेनाऽपि न ते वातमुदीरयन्ति, अयतप्रत्युपेक्षणादिक्रियया । किन्तु यतं परिहरन्ति च परिभोगपरिहारेण धारणापरिहारेण च ॥ ३९ ॥

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं ।
वाउकायसमारंभं जावज्जीवाइ वज्जए ॥ ४० ॥

छा० तस्मादेतं विज्ञाय, दोषं दुर्गतिवर्धनम् ।
वायुकायसमारम्भं, यावज्जीवं वर्जयेत् ॥ ४० ॥

'तम्हा०'—सुगमा ॥ ४० ॥ अथ एकादशस्थानमाह—

वणस्सइं न हिंसंति मणसा वयसं कायसा ।
तिविहेण करणजोएण, संजया सुसमाहिआ ॥ ४१ ॥

छा० वनस्पतिं न हिंसन्ति, मनसा वचसा कायेन ।
त्रिविधेन करणयोगेन, संयताः सुसमाहिताः ॥ ४१ ॥

१ पूर्ववत् ।

वणस्सइं विहिंसंतो हिंसइ उ तयस्सिए ।
तसे अ विविहे पाणे चक्खुसे अ अचक्खुसे ॥ ४२ ॥

छा० वनस्पतिं विहिंसन्, हिनस्ति तु(एव) तदाश्रितान् ।
त्रसाँश्च विविधान्प्राणिनः, चाक्षुषाँश्चाऽचाक्षुषान् ॥ ४२ ॥

तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं ।
वणस्सइसमारंभं जावज्जीवाइ वज्जए ॥ ४३ ॥

छा० तस्मादेतं विज्ञाय, दोषं दुर्गतिवर्धनम् ।
वनस्पतिसमारम्भं, यावज्जीवं वर्जयेत् ॥ ४३ ॥

'वणस्सइं०'–सुगमा ॥ ४१ ॥ 'वणस्सइं०'–सुगमा ॥ ४२ ॥ 'तम्हा०'–सुगमा ॥ ४३ ॥ अथ द्वादशस्थानमाह—

तसकायं न हिंसंति मणसा वयसं कायसा ।
तिविहेण करणजोएण संजया सुसमाहिआ ॥ ४४ ॥

छा० त्रसकायं न हिंसन्ति, मनसा वचसा कायेन ।
त्रिविधेन करणयोगेन, संयताः सुसमाहिताः ॥ ४४ ॥



१ पूर्ववत् ।

तसकायं विहिंसंतो हिंसइ उ तयस्सिए ।
तसे अ विविहे पाणे चक्खुसे अ अचक्खुसे ॥ ४५ ॥
छा० त्रसकायं विहिंसन्, हिनस्ति तु(एव) तदाश्रितान् ।
त्रसाँश्च विविधान्प्राणिनः, चाक्षुषाँश्चाऽचाक्षुषान् ॥ ४५ ॥
तम्हा एअं विआणित्ता दोसं दुग्गइवड्ढणं ।
तसकायसमारंभं जावज्जीवाइ वज्जए ॥ ४६ ॥
छा० तस्मादेतं विज्ञाय, दोषं दुर्गतिवर्धनम् ।
त्रसकायसमारम्भं, यावज्जीवं वर्जयेत् ॥ ४६ ॥

'तसकायं०'—सुगमा ॥ ४४ ॥ 'तसकायं०'—सुगमा ॥ ४५ ॥ 'तम्हा०'—सुगमा ॥ ४६ ॥

उक्तं कायषट्कम्, एतत्प्रतिपादनादुक्ता मूलगुणाः, अधुनैतद्वृत्तिभूलोत्तरगुणावसरः, तेचाऽकल्पादयः षडुत्तर-गुणाः, यथोक्तम्—'अकप्पो गिहिभायणं' इत्यादि, तत्राऽकल्पो द्विविधः—शिक्षकस्थापनाकल्पः, अकल्प्य(ल्प)स्थापना कल्पश्च, तत्र शिष्यकस्थापनाकल्पः—अनधीतपिण्डनिर्युक्त्याऽऽविनाऽऽनीतमाहारादि न कल्पते इति, उक्तञ्च—

"अणहीआ खलु जेणं,......" ॥ १ ॥

१ शिष्यकस्थापनाकल्प इति दृश्यते ।

२ पिंडेसणसिज्जवत्थपाएसा । तेणाणियाणि, जइणो, कप्पति ण पिंडमाईणि ॥१॥ इति—अवशिष्टं वृत्तितः ।

"उउबद्धंमि ण अणला, वासावासे उ दोवि णो सेहा ।
दिक्खिज्जंती पायं, ठवणाकप्पो इमो होइ" ॥ २ ॥

अकल्पस्थापनाकल्पं त्वाह—

जाइं चत्तारि भुंज्जाइं इसिणाहारमाइणि ।
ताइं तु विवज्जंतो संजमं अणुपालए ॥ ४७ ॥

छा० यानि चत्वार्यभोज्यानि, ऋषीणामाहारादीनि ।
तानि तु विवर्जयन्, संयममनुपालयेत् ॥ ४७ ॥

'जाइं०'—यानि चत्वारि अभोज्यानि संयमापकारित्वेन अकल्पनीयानि, ऋषीणां—साधूनाम्, आहारादीनि तानि तु विधिना विवर्जयन् सयमं—सप्तदशप्रकारमनुपालयेत् । तदत्यागे संयमाभावात् ॥४७॥ तदेव स्पष्टयति—

पिंडं सिज्जं च वत्थं च चउत्थं पायमेव य ।
अकप्पिअं न इच्छिज्जा पडिगाहिज्ज कप्पिअं ॥ ४८ ॥

छा० पिण्डं शय्यां च वस्त्रं च, चतुर्थं पात्रमेव च ।
अकल्पिकं नेच्छेत्, प्रतिगृह्णीयात्कल्पिकम् ॥ ४८ ॥



१ 'अभुज्जाइं' इत्यर्थे आर्पत्वाद् भुज्जाइं ज्ञेयम् ।

'पिंड०'–पिण्डं शय्यां च वस्त्रं चतुर्थं पात्रमेव चाऽकल्पिकं नेच्छेत्, प्रतिगृह्णीयात्कल्पिकम् ॥ ४८ ॥
अकल्पिके दोषमाह—

जे निआगं ममायंति कीयमुद्देसियाहडं ।
वहं ते समणुजाणंति इअ वुत्तं महेसिणा ॥ ४९ ॥
छा० ये नियागं ( नियोगिकं ) ममायन्ति, क्रीतमौद्देशिकाऽऽहृतम् ।
वधं ते समनुजानन्ति, इत्युक्तं महर्षिणा ॥ ४९ ॥

'जे निआगं०'–ये द्रव्यसाधवः 'नियागं'ति–नित्यमामन्त्रितं पिण्डं ममायन्ति–गृह्णन्ति, तथा 'क्रीतमौद्देशिकाहृतम्', वधं–स्थावरादिघातं ते द्रव्यसाध्वादयः समनुजानन्ति अनुमोदनेन इत्युक्तं वर्द्धमानेन ॥ ४९ ॥

तम्हा असणपाणाइं कीयमुद्देसियाहडं ।
वज्जयंति ठिअप्पाणो निग्गंथा धम्मजीविणो ॥ ५० ॥
छा० तस्मादशनपानादि, क्रीतमौद्देशिकाऽऽहृतम् ।
वर्जयन्ति स्थितात्मानः, निर्ग्रन्था धर्मजीविनः ॥ ५० ॥

'तम्हा०'–तस्मादशनपानादि क्रीतमौद्देशिकमाहृतं वर्जयन्ति स्थितात्मानः–महासत्त्वाः, निर्ग्रन्थाः, धर्मजीविनः–संयमैकजीविनः ॥ ५० ॥ इदानीं चतुर्दशस्थानमाह—

कंसेसु कंसपाएसु कुंडमोएसु वा पुणो ।
भुंजंतो असणपाणाइ आयारा परिभस्सइ ॥ ५१ ॥
छा० कांस्येषु कांस्यपात्रेषु, कुण्डमोदेषु वा पुनः ।
भुञ्जानोऽशनपानादि, आचारात्परिभ्रश्यति ॥ ५१ ॥

'कंसेसु०'—कंसेषु—कचोलकादिषु, कांस्यपात्रेषु—स्थालादिषु, कुण्डमोदेषु—हस्तिपादाकारेषु मृण्मयादिषु भाजनेषु, भुञ्जानोऽशनपानादि तदन्यदोषरहितमपि—आचाराच्छ्रमणसम्बन्धिनः परिभ्रश्यति ॥ ५१ ॥ कथमित्याह—

सीओदगसमारंभे मत्तधोअणछड्डुणे ।
जाइं छण्णंति भूआइं दिट्ठो तत्थ असंजमो ॥ ५२ ॥
छा० शीतोदकसमारम्भे, मात्रकधावनछर्दने ।
यानि क्षण्वन्ति भूतानि, दृष्टस्तत्राऽसंयमः ॥ ५२ ॥

'सीओदग०'—अनन्तरोक्तभाजनेषु श्रमणा भोक्ष्यन्ते, भुक्तं वैतैरिति, शीतोदकेन धावनं कुर्वन्ति, तदा शीतोदकसमारम्भे, तथा मात्रकधावनोज्झने यानि क्षण्यन्ते—हिंस्यन्ते भूतानि—अप्कायादीनि, दृष्टस्तत्र—गृहिभाजन-भोजने असंयमः केवलज्ञानभास्वता ॥ ५२ ॥



---

१ 'कांस्येषु' इति शुद्धपदेन भाव्यम् । २ क्षिप्यन्ते इति वा ।

पच्छाकम्मं पुरेकम्मं सिआ तत्थ न कप्पइ ।
एअमट्ठं न भुंजंति निग्गंथा गिहिभायणे ॥ ५३ ॥



छा० पश्चात्कर्म पुरःकर्म, स्यात्तत्र न कल्पते ।
एतदर्थं न भुञ्जते, निर्ग्रन्था गृहिभाजने ॥ ५३ ॥

'पच्छाकम्मं०'—पश्चात्कर्म पुरःकर्म स्यात्तत्र गृहिभाजनभोजने, एतच्च न कल्पते साधूनाम्, एतदर्थं पश्चात्कर्म(र्मादि)परिहारार्थं न भुञ्जते निर्ग्रन्था गृहिभाजने ॥ ५३ ॥ अथ पञ्चदशस्थानमाह—

आसंदी पलिअं मचमासालएसु वा ।
अणायरिअमज्जाणं आसइत्तु सइत्तु वा ॥ ५४ ॥

छा० आसन्दी-पर्यङ्कयोः, मञ्चाऽऽशालकयोर्वा ।
अनाचरितमार्याणाम्, आसितुं शयितुं वा ॥ ५४ ॥

'आसंदी०'—आसन्दीपर्यङ्कयोः—आसन्दी—आसनविशेषः, पर्यङ्कः—पल्यङ्कः, तयोः, मञ्चाऽऽशालकयोश्च—मञ्चः प्रतीतः, आशालकस्तु—अवष्टम्भसमन्वित आसनविशेषः, एतयोरनाचरितमार्याणां—साधूनामासितुम्—उपवेष्टुं, स्वप्तुं वा—निद्रातिवाहनं वा कर्तुम् ॥ ५४ ॥ अत्रैव अपवादमाह—

नासंदी पलिअंकेसु न निसिज्जा न पीढए ।
निग्गंथा पडिलेहाए बुद्धवुत्तमहिट्ठगा ॥ ५५ ॥
छा० नासन्दीपर्यङ्कयोः, न निपद्यायां न पीठके ।
निर्ग्रन्था अप्रतिलेख्या(ख्य), बुद्धोक्तमधिष्ठातारः ॥ ५५ ॥

'नासंदी०'—नासन्दीपर्यङ्कयोर्न निपद्यायां—गाद्दिकायां न पीठके वेत्रमयादौ निर्ग्रन्था अप्रत्युपेक्ष्य चक्षुरादिना, न निषदनादि कुर्वन्तीति वाक्यशेषः, बुद्धोक्तमधिष्ठातारः—तीर्थकरोक्तानुष्ठानपराः ॥ ५५ ॥ अत्रैव दोषमाह—

गंभीरविजया एए पाणा दुप्पडिलेहगा ।
आसंदी पलिअंको अ एयमट्ठं विवज्जिआ ॥ ५६ ॥
छा० गम्भीरविजया एते, प्राणिनो(प्राणा) दुष्प्रतिलेख्याः ।
आसन्दीपर्यङ्कश्च, एतदर्थं विवर्जिताः ॥ ५६ ॥

'गंभीर०'—गम्भीरविजया इति गम्भीरमप्रकाशं, विजयः—आश्रयः, अप्रकाशाश्रयाः, एते प्राणिनामासन्यादयः, एवं च प्राणिनो दुष्प्रतिप्रे(त्युपे)क्षणीया एतेषु भवन्ति, पीड्यन्ते चैतदुपवेशनादिना, आसन्दः पर्यङ्कश्च, 'च'—शब्दान्मञ्चादयश्च एतदर्थं विवर्जिताः साधुभिः ॥ ५६ ॥ अथ षोडशस्थानमाह—

पच्छाकम्मं पुरेकम्मं सिआ तत्थ न कप्पइ ।
एअमट्ठं न भुंजंति निग्गंथा गिहिभायणे ॥ ५३ ॥

छा० पश्चात्कर्म पुरःकर्म, स्यात्तत्र न कल्पते ।
एतदर्थं न भुञ्जते, निर्ग्रन्था गृहिभाजने ॥ ५३ ॥

'पच्छाकम्मं०'—पश्चात्कर्म पुरःकर्म स्यात्तत्र गृहिभाजनभोजने, एतच्च न कल्पते साधूनाम्, एतदर्थं पश्चात्कर्म(मादि)परिहारार्थं न भुञ्जते निर्ग्रन्था गृहिभाजने ॥ ५३ ॥ अथ पञ्चदशस्थानमाह—

आसंदी पलिअं मचमासालएसु वा ।
अणायरिअमज्जाणं आसइत्तु सइत्तु वा ॥ ५४ ॥

छा० आसन्दी-पर्यङ्कयोः, मञ्चाऽऽशालकयोर्वा ।
अनाचरितमार्याणाम्, आसितुं शयितुं वा ॥ ५४ ॥

'आसंदी०'—आसन्दीपर्यङ्कयोः—आसन्दी—आसनविशेषः, पर्यङ्कः—पल्यङ्कः, तयोः, मञ्चाऽऽशालकयोश्च—मञ्चः प्रतीतः, आशालकस्तु—अवष्टम्भसमन्वित आसनविशेषः, एतयोरनाचरितमार्याणां—साधूनामासितुम्—उपवेष्टुं, स्वप्तुं वा—निद्रातिवाहनं वा कर्तुम् ॥ ५४ ॥ अत्रैव अपवादमाह—

अगुत्ती बंभचेरस्स इत्थीओ वा वि संकणं ।
कुसीलवड्ढणं ठाणं दूरओ परिवज्जए ॥ ५९ ॥
छा० अगुप्तिर्ब्रह्मचर्यस्य, स्त्रीतो वाऽपि शङ्कनम् ।
कुशीलवर्धनं स्थानं, दूरतः परिवर्जयेत् ॥ ५९ ॥

'अगुत्ती०'—अगुप्तिर्ब्रह्मचर्यस्य, तदिन्द्रियाद्यवलोकनेन, स्त्रीतश्चाऽपि शङ्का स्यात्, तदुत्फुल्ललोचनदर्शनादिनाऽनुभूतगुणायाः, (उक्तप्रकारेण) कुशीलवर्द्धनं स्थानं दूरतः परिवर्जयेत् ॥ ५९ ॥ सूत्रेणैव अपवादमाह—

तिण्हमण्णयरागस्स निसिज्जा जस्स कप्पइ ।
जराए अभिभूअस्स वाहिअस्स तवस्सिणो ॥ ६० ॥
छा० त्रयाणामन्यतमस्य(तरस्य), निषद्या यस्य कल्पते ।
जरसाऽभिभूतस्य, व्याधितस्य तपास्विनः ॥ ६० ॥

'तिण्ह०'—त्रयाणां वक्ष्यमाणलक्षणानामन्यतरस्यैकस्य निषद्या गोचराग्रप्रविष्टस्य यस्य कल्पते, तस्य तदाऽऽसेवने न दोष इति शेषः, कस्य कल्पत इत्याह—जरयाऽभिभूतस्य—अत्यन्तवृध्दस्य, व्याधिमतः—अत्यन्तमशक्तस्य, तपस्विनः—विकृष्टक्षपकस्य, एते भिक्षाऽटनं न कार्यन्त एव, (ततः) आत्मलब्धिकानामिदं सूत्रम् ॥ ६० ॥ इदानीं स्नानदूरस्थानमाह—

गोअरग्गपविट्ठस्स निसिज्जा जस्स कप्पइ ।
इमेरिसमणायारं आवज्जइ अबोहिअं ॥ ५७ ॥

छा० गोचराग्रप्रविष्टस्य, निषद्या यस्य कल्पते ।
ईदृशमनाचारम्, आपद्यतेऽबोधिकम् ॥ ५७ ॥

'गोअरग्ग०'—गोचराग्रप्रविष्टस्य [प्रथमार्थे षष्ठी] निषद्या यस्य कल्पते—करोति स एवमीदृशं वक्ष्यमाण-लक्षणमनाचारमापद्यते—प्राप्नोति अबोधिकं—मिथ्यात्वफलम् ॥ ५७ ॥ अनाचारमाह—

विवत्ती बंभचेरस्स पाणाणं च वहे वहो ।
वणीमगपडीघाओ पडिकोहो अगारिणं ॥ ५८ ॥

छा० विपत्तिर्ब्रह्मचर्यस्य, प्राणिनां च वधे वधः ।
वनीपकप्रतीघातः, प्रतिक्रोधोऽगारिणाम् ॥ ५८ ॥

'विवत्ती०'—विपत्तिर्ब्रह्मचर्यस्य—आज्ञाखण्डनादोषतः साधुसमाचारस्य, प्राणिनां च वधे वधो भवति, तथासम्बन्धादाधाकर्मादिकरणेन, वनीपकप्रतीघातः, तदाक्षेपणाऽदित्साऽभिधानादिना, प्रतिक्रोधश्चाऽगारिणां तत्स्वजनानां (च) स्यात् तथाक्षेपदर्शनादिना ॥ ५८ ॥

तम्हा ते ण सिणायंति सीएण उसिणेण वा ।
जावज्जीवं वयं घोरं असिणाणमहिट्ठगा ॥ ६३ ॥

छा० तस्मात्ते न स्नान्ति, शीतेनोष्णेन वा ।
यावज्जीवं व्रतं घोरम्, अस्नानमधिष्ठातारः ॥ ६३ ॥

'तम्हा०'–तस्मात्ते साधवो न स्नान्ति शीतेनोष्णेन वोदकेन यावज्जीवम्–आजन्मव्रतं घोरमस्नानमाश्रित्याधिष्ठातारः–अस्यैव कर्तारः ॥ ६३ ॥ किञ्च—

सिणाणं अदुवा कक्कं लुद्धं पउमगाणि अ ।
गायस्सुव्वट्टणट्ठाए नायरंति कयाइ वि ॥ ६४ ॥

छा० स्नानमथवा कल्कं, लोध्रं पद्मकानि च ।
गात्रस्योद्वर्तनार्थं, नाचरन्ति कदाचिदपि ॥ ६४ ॥

'सिणाणं०'–स्नानमथवा कल्कं–चन्दनकल्कादि, लोध्रं–गन्धद्रव्यं, पद्मकानि च–कुङ्कुमकेसराणि, 'च'–शब्दादन्यदप्येवंविधं गात्रस्योद्वर्तनार्थम्–उद्वर्तननिमित्तं नाचरन्ति कदाचिदपि ॥ ६४ ॥ साम्प्रतमष्टादशस्थानमाह–'शोभायां नास्ति दोषोऽलङ्कृतश्चाऽपि चरेद्धर्मम्' इत्यादि प्रकीर्णवचनात्, (इति) पराभिप्रायमाशङ्क्याऽऽह—

वाहिओ वा अरोगी वा सिणाणं जो उ पत्थए ।
वुक्कंतो होइ आयारो जढो हवइ संजमो ॥ ६१ ॥

छा० व्याधितो वा, अरोगी वा, स्नानं यस्तु प्रार्थयते ।
व्युत्क्रान्तो भवत्याचारः, त्यक्तो(जढो) भवति संयमः ॥ ६१ ॥

'वाहिओ०'–व्याधिमान्–व्याधिग्रस्तः, अरोगी वा, स्नानं यस्तु प्रार्थयते–सेवत इत्यर्थः, तेन व्युत्क्रान्तो भवत्याचारो बाह्यतपोरूपः, अस्नानपरीषहाऽनतिसहनात्, जढः–परित्यक्तो भवति संयमः ॥ ६१ ॥ प्रासुकोदकस्नानेन कथं संयमत्यागः ? इत्याह—

संतिमे सुहुमा पाणा घसासु भिलुगासु अ ।
जे अ भिक्खू सिणाअंतो वियडेणुप्पलावए ॥ ६२ ॥

छा० सन्तीमे सूक्ष्माः प्राणाः(प्राणिनः), घसासु भिलुकासु च ।
यॉश्च भिक्षुः स्नान्, विकटेनोत्प्लावयति ॥ ६२ ॥

'संतिमे०'–सन्ति एते प्रत्यक्षोपलभ्यमानस्वरूपाः सूक्ष्माः प्राणाः घसासु–सुषिरभूमिषु, भिलुगासु च–तथा-विधभूमिराजीषु च, यांस्तु भिक्षुः स्नान् विकटेन–प्रासुकोदकेन (विकृतेन वा) उत्प्लावयति ॥ ६२ ॥ निगमयन्नाह-

तम्हा ते ण सिणायंति सीएण उसिणेण वा ।
जावज्जीवं वयं घोरं असिणाणमहिट्ठगा ॥ ६३ ॥

छा० तस्मात्ते न स्नान्ति, शीतेनोष्णेन वा ।
यावज्जीवं व्रतं घोरम्, अस्नानमधिष्ठातारः ॥ ६३ ॥

'तम्हा०'-तस्मात्ते साधवो न स्नान्ति शीतेनोष्णेन वोदकेन यावज्जीवम्-आजन्मव्रतं घोरमस्नानमाश्रित्याधिष्ठातारः-अस्यैव कर्तारः ॥ ६३ ॥ किञ्च—

सिणाणं अदुवा कक्कं लुद्धं पउमगाणि अ ।
गायस्सुव्वट्टणट्ठाए नायरंति कयाइ वि ॥ ६४ ॥

छा० स्नानमथवा कल्कं, लोध्रं पद्मकानि च ।
गात्रस्योद्वर्तनार्थं, नाचरन्ति कदाचिदपि ॥ ६४ ॥

'सिणाणं०'-स्नानमथवा कल्कं-चन्दनकल्कादि, लोध्रं-गन्धद्रव्यं, पद्मकानि च-कुङ्कुमकेसराणि, 'च'-शब्दादन्यच्चैवंविधं गात्रस्योद्वर्तनार्थम्-उद्वर्तननिमित्तं नाचरन्ति कदाचिदपि ॥ ६४ ॥ साम्प्रतमष्टादशस्थानमाह-'शोभायां नास्ति दोषोऽलङ्कृतश्चाऽपि चरेद्धर्मम्' इत्यादि प्रकीर्णवचनात्, (इति) पराभिप्रायमाशङ्क्याऽऽह—

नगिणस्स वा वि मुंडस्स दीहरोमनहंसिणो ।
मेहुणा उवसंतस्स किं विभूसाइ कारिअं ? ॥ ६५ ॥

छा० नग्नस्य वाऽपि मुण्डस्य, दीर्घरोमनखिनः(नखवतः) ।
मैथुनादुपशान्तस्य, किं विभूषया कार्यम् ॥ ६५ ॥

'नगिणस्स०'–नग्नस्याऽपि–नग्नः–जिनकल्पी, उपचारात्प्रमाणवासा अपि कुचेलत्वान्नग्नः, जिनकल्पिकस्य वा, मुण्डस्य द्रव्यभावाभ्यां, दीर्घरोमनखवतः–रोमाणि कक्षादिषु, दीर्घनखवतो ( हस्ताऽऽद्यै ) जिनकल्पिकस्य, इतरस्य तु प्रमाणयुक्ता एव नखा भवन्ति, मैथुनादुपशान्तस्य–उपरतस्य, किं विभूषया–राढया कार्यम् ? न किञ्चिदिति ॥ ६५ ॥ प्रयोजनाभावमभिधायाऽपायमाह—

विभूसावत्तिअं भिक्खू कम्मं बंधइ चिक्कणं ।
संसारसायरे घोरे जेणं पडइ दुरुत्तरे ॥ ६६ ॥

छा० विभूषावृत्तिकं भिक्षुः, कर्म बध्नाति चिक्कणम् ।
संसारसागरे घोरे येन पतति दुरुत्तरे ॥ ६६ ॥



'विभूसा०'–विभूषाप्रत्ययं–विभूषानिमित्तं भिक्षुः कर्म बध्नाति चिक्कणं–दारुणम्, संसारसागरे घोरे

येन कारणेन पतति दुरुत्तरे–अकुशलानुबन्धतोऽत्यन्तदीर्घे इति ॥ ६६ ॥ इत्थं बाह्यविभूषाऽपायमुक्त्वा प्रकल्पविभूषाऽपायमाह—

विभूसावत्तिअं चेअं बुद्धा मण्णंति तारिसं ।
सावज्जबहुलं चेअं नेअं ताईहिं सेविअं ॥ ६७ ॥

छा० विभूषावृत्तिकं चैतत्, बुद्धा मन्यन्ते तादृशम् ।
सावद्यबहुलं चैतत्, नैतत्त्रायिभिः सेवितम् ॥ ६७ ॥

'विभूसावत्तिअं०'–विभूषाप्रत्ययवतः–एवं चैवं च यदि मम विभूषा सम्पद्यत इति, तत्प्रवृत्त्यङ्गं चित्तमित्यर्थः, बुद्धास्तीर्थकरा मन्यन्ते तादृशं–रौद्रकर्मबन्धहेतुभूतं विभूषाक्रियासदृशं सावद्यबहुलं चैतद् आर्तध्यानानुगतं चेतः, नैतदित्थम्भूतं त्रातृभिः सेवितमाचरितम् ॥ ६७ ॥ फलप्रदर्शनेन उपसंहरन्नाह—

खवंति अप्पाणममोहदंसिणो ।
तवे रया संजम-अज्जवे गुणे ॥
धुणंति पावाइं पुरेकडाइं ।
नवाइं पावाइं न ते करिंति ॥ ६८ ॥

छा० क्षपयन्त्यात्मानममोहदर्शिनः ।
तपसि रताः संयमाऽऽर्जवे गुणे ॥

नगिणस्स वा वि मुंडस्स दीहरोमनहंसिणो ।
मेहुणा उवसंतस्स किं विभूसाइ कारिअं ? ॥ ६५ ॥

छा० नग्नस्य वाऽपि मुण्डस्य, दीर्घरोमनखिनः(नखवतः) ।
मैथुनादुपशान्तस्य, किं विभूषया कार्यम् ॥ ६५ ॥

'नगिणस्स०'–नग्नस्याऽपि–नग्नः–जिनकल्पी, उपचारात्प्रमाणवासा अपि कुचेलत्वान्नग्नः, जिनकल्पिकस्य वा, मुण्डस्य द्रव्यभावाभ्यां, दीर्घरोमनखवतः–रोमाणि कक्षादिषु, दीर्घनखवतो ( हस्ताऽऽदौ ) जिनकल्पिकस्य, इतरस्य तु प्रमाणयुक्ता एव नखा भवन्ति, मैथुनादुपशान्तस्य–उपरतस्य, किं विभूषया–राढया कार्यम् ? न किञ्चिदिति ॥ ६५ ॥ प्रयोजनाभावमभिधायाऽपायमाह—

विभूसावत्तिअं भिक्खू कम्मं बंधइ चिक्कणं ।
संसारसायरे घोरे जेणं पडइ दुरुत्तरे ॥ ६६ ॥

छा० विभूषावृत्तिकं भिक्षुः, कर्म बध्नाति चिक्कणम् ।
संसारसागरे घोरे येन पतति दुरुत्तरे ॥ ६६ ॥

'विभूसा०'–विभूषाप्रत्ययं–विभूषानिमित्तं भिक्षुः कर्म बध्नाति चिक्कणं–दारुणम्, संसारसागरे घोरे

येन कारणेन पतति दुरुत्तरे—अकुशलानुबन्धतोऽत्यन्तदीर्घे इति ॥ ६६ ॥ इत्थं बाह्यविभूषाऽपायमुक्त्वा सकल्पविभूषाऽपायमाह—

विभूसावत्तिअं चेअं बुद्धा मण्णंति तारिसं ।
सावज्जबहुलं चेअं नेअं ताईहिं सेविअं ॥ ६७ ॥

छा० विभूषावृत्तिकं चैतत्, बुद्धा मन्यन्ते तादृशम् ।
सावद्यबहुलं चैतत्, नैतत्त्रायिभिः सेवितम् ॥ ६७ ॥

'विभूसावत्तिअं०'—विभूषाप्रत्ययवतः—एवं चैवं च यदि मम विभूषा सम्पद्यत इति, तत्प्रवृत्त्यङ्गं चित्तमित्यर्थः, बुद्धास्तीर्थकरा मन्यन्ते तादृशं—रौद्रकर्मबन्धहेतुभूतं विभूषाक्रियासदृशं सावद्यबहुलं चैतद् आर्तध्यानानुगतं चेतः, नैतदित्यम्भूतं त्रातृभिः सेवितमाचरितम् ॥ ६७ ॥ फलप्रदर्शनेन उपसंहरन्नाह—

खवंति अप्पाणममोहदंसिणो ।
तवे रया संजम-अज्जवे गुणे ॥
धुणंति पावाइं पुरेकडाइं ।
नवाइं पावाइं न ते करिंति ॥ ६८ ॥

छा० क्षपयन्त्यात्मानममोहदर्शिनः ।
तपसि रताः संयमाऽऽर्जवे गुणे ॥

धुन्वन्ति पापानि पुराकृतानि ।
नवानि पापानि न ते कुर्वन्ति ॥ ६८ ॥

'खवंति०'—क्षपयन्त्यात्मानम् अमोहदर्शिनः—यथावस्थितार्थदर्शिनः, तपसि रताः, किंविशिष्टे तपसि ? संयमार्जवे गुणो यस्य तपसस्तस्मिन् [प्राकृतत्वादेकारः,] धुन्वन्ति—कम्पयन्ति पापानि पुराकृतानि, (नवानि)पापानि न ते साधवः कुर्वन्ति ॥ ६८ ॥

सओवसंता अममा अकिंचणा ।
सविज्जविज्जाणुगया जसंसिणो ॥
उउप्पसण्णे विमले व चंदिमा ।
सिद्धिं विमाणाइं उविंति ताइणो ॥ ६९ ॥ त्ति बेमि ।

छा० सदोपशान्ता अममा अकिञ्चनाः ।
स्वविद्या–विद्याऽनुगता यशस्विनः ॥
ऋतुप्रसन्ने विमलो व चन्द्रमाः ।
सिद्धिं विमानान्युपयान्ति त्रायिणः ॥ ६९ ॥ इति ब्रवीमि ।

'सओवसंता०'–सदोपशान्ताः–नित्यं क्रोधरहिताः, अममाः–ममत्वशून्याः, अकिञ्चनाः–स्वर्णमिथ्यात्वादिद्रव्यभावकिञ्चनमुक्ताः, स्वा–आत्मीया विद्या स्वविद्या–परलोकोपकारिणी, केवलश्रुतरूपा, तया स्वविद्यया विद्यानुगताः–युक्ताः, न पुनः परविद्यया–इहलोकोपकारिण्येति, यशस्विनः(ते),ऋतौ प्रसन्ने शरत्कालादौ विमल इव चन्द्रमाः–चन्द्रमा इव विमलाः, इत्येवंकल्पास्ते भावमलरहिताः सिद्धिं–निर्वृतिं(वा) सावशेषकर्माणो विमानानि सौधर्मावतंसकादीनि भजन्ति त्रातारः–साधवः । ब्रवीमीति पूर्ववत् ॥ ६९ ॥ इति धर्मार्थकामाध्ययनस्य महाचारस्य वा अवचूर्णिः ।



॥ धम्मत्थकामज्झयणं छट्ठं ॥

॥ इति धर्मार्थकामाऽध्ययनं षष्ठम् ॥



## ॥ अथ सप्तमाध्ययनम् ॥



महाऽऽचारकथायाम् आलयगतेनैव स्वाऽऽचारो वाच्य इत्युक्तम् । इह त्वालयगतेनाऽपि गुरुणा साधुना वा वचनदोषगुणाऽभिज्ञेन निरवद्यवचसा कथयितव्य इत्येतदुच्यते । उक्तञ्च—

" सावज्जणवज्जाणं वयणाणं जो ण जाणइ विसेसं ।
वोत्तुं पि तस्स न खमं, किमंग ! पुण देसणं काउं ? " ॥ १ ॥

इत्यनेन सम्बन्धेनाऽऽयातमिदमध्ययनम्, तथा च—

**चउण्हं खलु भासाणं परिसंखाय पण्णवं ।**
**दुण्हं तु विणयं सिक्खे दो न भासिज्ज सव्वसो ॥ १ ॥**

छा० **चतसृणां खलु भाषाणां, परिसंख्याय प्रज्ञावान् ।**
**द्वाभ्यां तु विनयं शिक्षेत, द्वे न भाषेत सर्वशः ॥ १ ॥**

'चउण्हं०'—चतसृणां 'खलु'—शब्दोऽवधारणे, भाषाणां परिसंख्याय—सर्वैः प्रकारैर्ज्ञात्वा स्वरूपमितिशेषः, प्रज्ञावान् द्वाभ्यामेव सत्याऽसत्यामृषाभ्याम्, तुरवधारणे, विनयं—शुद्धप्रयोगं शिक्षेत—जानीयात्, द्वे असत्यसत्यामृषे न भाषेत, सर्वशः—सर्वैः प्रकारैरिति ॥ १ ॥ विनयमेवाऽऽह—

जा य सच्चा अवत्तव्वा सच्चामोसा य जा मुसा ।
जा य बुद्धेहिं णाइण्णा न तं भासिज्ज पण्णवं ॥ २ ॥
छा० या च सत्याऽवक्तव्या, सत्यामृषा च या मृषा ।
या च बुद्धैरनाचीर्णा, न तां भाषेत प्रज्ञावान् ॥ २ ॥

'जा य०'— या च सत्या पदार्थतत्त्वमङ्गीकृत्याऽवक्तव्या साऽवद्यत्वेन, अमुत्र स्थिता पल्लीति कौशिकभाषावत्, सत्यामृषा वा—यथा—दश दारका जाताः, इत्येवंलक्षणा, मृषा च सम्पूर्णैव, 'च'-शब्दस्य व्यवहितः सम्बन्धः, या च बुद्धैस्तीर्थकरादिभिरनाचरिता, असत्यामृषा—आमन्त्रणी—आज्ञापन्यादिलक्षणा, अविधिपूर्वकं स्वरादिना प्रकारेण नैना भाषेत प्रज्ञावान् ॥ २ ॥ उक्ताऽवाच्या, अथ वाच्यामाह—

असच्चमोसं सच्चं च अणवज्जमकक्कसं ।
समुप्पेहमसंदिद्धं गिरं भासिज्ज पण्णवं ॥ ३ ॥
छा० असत्यामृषां सत्यां च, अनवद्यामकर्कशाम् ।
समुत्प्रेक्ष्याऽसन्दिग्धां, गिरं भाषेत प्रज्ञावान् ॥ ३ ॥

'असच्चमोसं०'—असत्यामृषा, सत्या वोक्तलक्षणाम्, इयं साऽवद्या कर्कशाऽपि भवत्यत आह—'असाऽवद्यामपापामकर्कशाम्'—अतिशयोक्त्या ह्यमत्सरपूर्वां, सम्प्रेक्ष्य—स्वारोपकारिणीमिति बुद्ध्याऽऽलोच्य, असन्दिग्धां—स्पष्टा गिरं—वाचं भाषेत प्रज्ञावान् ॥ ३ ॥ अथ सत्यासत्यामृषाप्रतिषेधार्थमाह—

एअं च अट्ठमण्णं वा जं तु णामेइ सासयं ।
स भासं सच्चमोसं पि तं पि धीरो विवज्जए ॥ ४ ॥
छा० एतं चार्थमन्यं वा, यस्तु नमयति शाश्वतम् ।
स भाषां सत्यामृषामपि, तामपि धीरो विवर्जयेत् ॥ ४ ॥

'एअं च०'–एतं चाऽर्थमनन्तरप्रतिषिद्धं साऽवद्यं सकर्कशमन्यं वैतज्जातीयं यं [ प्राकृतशैल्या ] यस्तु नमयति शाश्वतम्, य एव कश्चिदर्थो नमयति–अननुगुणं करोति शाश्वतं–मोक्षम्, तमाश्रित्य स साधुर्भाषां सत्यामृषामपि, अपिशब्दात्सत्याऽपि या तथाभूता तामपि धीरो विवर्जयेत् । आह–सत्यामृषाया ओघत एव प्रतिषेधात् तथाभूतसत्यायाश्च साऽवद्यत्वेन गताऽर्थं सूत्रमिति ? उच्यते–' मोक्षपीडाकरं सूक्ष्ममप्यर्थमङ्गीकृत्य–अन्यतरभाषाया अपि भाषणं न कर्तव्यमित्यतिशयप्रदर्शनपरमेतददुष्टमेव ॥ ४ ॥ साम्प्रतं मृषाभाषासंरक्षणाऽर्थमाह–

वितहं पि तहामुत्तिं जं गिरं भासए नरो ।
तम्हा सो पुट्ठो पावेण किं पुणं जो मुसं वए ॥ ५ ॥
छा० वितथामपि तथामूर्तिं, यां गिरं भाषते नरः ।
तस्मात्स स्पृष्टः पापेन, किं पुनर्यो मृषां वदेत्(वक्ति) ॥ ५ ॥

'वितहं पि०'–वितथम्–अतथ्यम्, तथामूर्त्यपि कथञ्चित् तत्स्वरूपमपि वस्तु, अपिर्भिन्नक्रमे, एतदुक्तं स्यात्–

पुरुषनेपथ्यस्थितवनिताद्यपि—अङ्गीकृत्य यां गिरं भाषते नरः—' इयं स्त्री—आगच्छति गायति वेश्यादिरूपाम्', तस्माद् भाषणात्पूर्वमेवाऽसौ वक्ता स्पृष्टः पापेन, किं पुनर्यो मृषां वक्ति ? ॥ ५ ॥

तम्हा गच्छामो वक्खामो अमुगं वा णे भविस्सइ ।
अहं वा णं करिस्सामि एसो वा णं करिस्सइ ॥ ६ ॥

छा० तस्माद्गमिष्यामो वक्ष्यामः, अमुकं वा नो भविष्यति ।
अहं वा करिष्यामि, एष वा करिष्यति ॥ ६ ॥

'तम्हा०'—यस्माद् वितथं तथामूर्त्यपि वस्त्वङ्गीकृत्य भाषमाणो बध्यते, तस्माद् गमिष्याम एव श्व इतोऽन्यत्र, वक्ष्याम एव श्वस्तत्र तद्दोषधीनिमित्तमिति, अमुकं वा नोऽस्माकं वसत्यादिकं भविष्यत्येव, अहं चेदं लोचाऽदि करिष्यामि नियमेन, एष वा साधुरस्माकं विश्रमणादि करिष्यत्येव ॥ ६ ॥

एवमाइ उ जा भासा एसकालम्मि संकिआ ।
संपयाईअमट्ठे वा तं पि धीरो विवज्जए ॥ ७ ॥

छा० एवमाद्या तु या भाषा, एष्यत्काले शङ्किता ।
साम्प्रताऽतीतार्थयोः, तामपि धीरो विवर्जयेत् ॥ ७ ॥

'एवमाइ०'—एवमाद्या तु या भाषा एष्यत्काले—भविष्यत्काले शङ्किता बहुविघ्नत्वान्मुहूर्ताऽऽदिनाम्, तथा

साम्प्ताऽतीताऽर्थयोरपि या शङ्किता तामपि धीरो विवर्जयेत्, तत्तथाभावनिश्चयाऽभावेन व्यभिचारतो मृषात्वोपपत्तेः, विघ्नतोऽगमनादौ गृहस्थमध्ये लाघवाऽऽदिप्रसङ्गात् सर्वमेव साऽवसरं वक्तव्यम् ॥ ७ ॥

अईअंमि अ कालंमि पच्चुप्पण्णमणागए ।
जमट्ठं तु न जाणिज्जा एवमेअं ति णो वए ॥ ८ ॥

छा० अतीते च काले, प्रत्युत्पन्नेऽनागते ।
यमर्थं तु न जानीयात्, एवमेतदिति नो वदेत् ॥ ८ ॥

'अईअंमि०'—अतीते च काले तथा प्रत्युत्पन्ने—वर्तमानेऽनागते च काले यमर्थन्तु न जानीयात्—तमङ्गीकृत्यैवमेतदिति नो वदेत् ॥ ८ ॥

अईअंमि अ कालंमि पच्चुप्पण्णमणागए ।
जत्थ संका भवे तं तु एवमेअं ति णो वए ॥ ९ ॥

छा० अतीते च काले, प्रत्युत्पन्नेऽनागते ।
यत्र शङ्का भवेत्तत्तु, एवमेतदिति नो वदेत् ॥ ९ ॥

'अईअंमि०'—यत्राऽर्थे शङ्का भवेत्, तदर्थमाश्रित्य, 'तु' अप्यर्थः (न ब्रूयात्) ॥ ९ ॥



अईअंमि अ कालंमि पच्चुप्पण्णमणागए ।
णिस्संकिअं भवे जं तु एवमेअं ति णिद्दिसे ॥ १० ॥

छा० अतीते च काले प्रत्युत्पन्नेऽनागते ।
निश्शङ्कितं भवेद्यत्तु, एवमेतदिति निर्दिशेत् ॥ १० ॥

'अईअंमि०'—यदर्थजातं निश्शङ्कितं भवेत्, 'तु'—शब्दादनवद्यं भवेत्, तदेवमेतदिति निर्दिशेत् ॥ १० ॥

तहेव फरुसा भासा गुरुभूओवघाइणी ।
सच्चा वि सा न वत्तव्वा जओ पावस्स आगमो ॥ ११ ॥

छा० तथैव परुषा भाषा, गुरुभूतोपघातिनी ।
सत्याऽपि सा न वक्तव्या, यतः पापस्याऽऽगमः ॥ ११ ॥

'तहेव०'—तथैव परुषा भाषा निष्ठुरा, गुरुभूतोपघातिनी—महाभूतोपघातिनी सत्याऽपि सा न वक्तव्या, यतः—परया भाषायाः सकाशात् पापस्याऽऽगमो भवति ॥ ११ ॥

तहेव काणं काणत्ति पंडगं पंडगत्ति वा ।
वाहिअं वा वि रोगित्ति तेणं चोरत्ति नो वए ॥ १२ ॥

छा० तथैव काणं काण इति, पण्डकं पण्डक इति वा ।
व्याधितं वाऽपि रोगीति, स्तेनं चौर इति नो वदेत् ॥ १२ ॥

'तहेव०'—तथैव 'काणं'ति —भिन्नाऽक्षं काण इति, पण्डकं—नपुंसकं पण्डक इति वा, व्याधिमन्तं वा रोगीति, स्तेनं—चौरं चौर इति नो वदेत्, अप्रीतिलज्जानाशस्थिररोगवृद्धिविराधनादिदोषप्रसङ्गात् ॥ १२ ॥

एएणण्णेण अट्ठेण परो जेणुवहम्मइ ।
आयारभावदोसण्णू न तं भासिज्ज पण्णवं ॥ १३ ॥
छा० एतेनाऽन्येनार्थेन, परो येनोपहन्यते ।
आचारभावदोषज्ञः, न तं भाषेत प्रज्ञावान् ॥ १३ ॥

'एएण०'—एतेनाऽन्येन वाऽर्थेनोक्तेन सता परो येनोपहन्यते, आचारभावदोषज्ञो यतिर्न तं भाषेत प्रज्ञावान् ॥ १३ ॥

तहेव होले गोलित्ति साणे वा वसुलित्ति अ ।
दमए दूहए वा वि न तं भासिज्ज पण्णवं ॥ १४ ॥
छा० तथैव होल गोल इति, श्वा वा वसुल इति च ।
द्रमको दुर्भगश्चापि, नैवं भाषेत प्रज्ञावान् ॥ १४ ॥

'तहेव०'—तथैव होलः—रे मूर्ख, हालिकः । गोलः—जारजातः, देशाऽन्तररूढनैष्ठुर्यसम्बोधने होलाऽऽदि-शब्दाः, न वाच्याः । श्वानो वा वसुल इति वा छीनालः, द्रमको दुर्भगो वाऽपि नैवं भाषेत प्रज्ञावान् ॥ १४ ॥

स्त्रीपुरुषयोः सामान्येन भाषणप्रतिषेधं कृत्वा, अथ स्त्रियमधिकृत्याऽऽह—

अज्जिए पज्जिए वा वि अम्मो माउस्सिअत्ति अ ।
पिउस्सिए भाइणिज्जित्ति धूए नत्तुणित्ति अ ॥ १५ ॥

छा० आर्यिके प्रार्यिके वाऽपि, अम्ब मातृष्वसः! इति च।
पितृष्वसः! भागिनेयीति, दुहितः! नप्तः! इति च॥ १५॥

'अज्जिए०'—आर्यिके! प्रार्यिके! वाऽपि अम्ब! मातृष्वसः! इति च पितृष्वसः! भागिनेयीति दुहितः! नप्तृ इति च, एतानि ह्यामन्त्रणवचनानि, तत्र मातुः पितुर्वा माता—आर्यिका, तस्या अपि याऽन्या माता सा प्रार्यिका, शेषाणि प्रकटार्थानि॥ १५॥

हले हलित्ति अण्णित्ति भट्टे सामिणि गोमिणि।
होले गोले वसुलित्ति इत्थिअं नेवमालवे॥ १६॥
छा० हले हले इति, अन्ये इति, भट्टे स्वामिनि गोमिनि।
होले गोले वसुले इति, स्त्रियं नैवमालपेत्॥ १६॥

'हले०'—हले हले! इत्येवम्, अन्ये! इत्येवम्, तथा भट्टे! स्वामिनि! गोमिनि! तथा होले! गोले! वसुले! इत्येतान्यपि नानादेशाऽपेक्षयाऽऽमन्त्रणवचनानि गौरवकुत्साऽऽदिगर्भाणि वर्तन्ते, यतश्चैवमतः स्त्रियं नैवं होलादिशब्दैरालपेत्, दोषाश्चैवमालपनं कुर्वतः सङ्गगर्हातरप्रद्वेषप्रवचनलाघवादयः॥१६॥ कथं तर्ह्यालपेदित्याह—

नामधिज्जेण णं बूआ इत्थीगुत्तेण वा पुणो।
जहारिहमभिगिज्झ आलविज्ज लविज्ज वा॥ १७॥

छा० नामधेयेन ब्रूयात्, स्त्रीगोत्रेण वा पुनः ।
यथार्हमभिगृह्य, आलपेल्लपेद्वा ॥ १७ ॥



'नामधिज्जेण०'–नामधेयेन 'णं' एवाऽर्थे नाम्नैव एनां ब्रूयात्, कचित् कारणे यथा देवदत्ते ! इत्येवमादि, नामाऽस्मरणे स्त्रीगोत्रेण वा पुनर्ब्रूयात्, यथा काश्यपगोत्रे ! इत्येवमादि, यथाऽर्हं–यथायोग्यं वयोदेशैश्वर्यजात्याद्यपेक्षया अभिगृह्य–गुणदोषानालोच्य आलपेत्, लपेद्वा, ईषत् सकृद्वा लपनमालपनम्, अतोऽन्यथा लपनम्, वयोवृद्धा मध्यदेशे 'ईश्वरा' 'धर्मप्रिया', अन्यत्रोच्यते–'धर्मशीला' इत्यादिना वा, अन्यथा यथा न लोकोत्तः ॥ १७ ॥ अथ पुरुषमाश्रित्याऽऽह–

अज्जए पज्जए वा वि बप्पा चुल्लपिउत्ति अ ।
माउला भाइणिज्जत्ति पुत्ते नत्तुणित्ति अ ॥ १८ ॥

छा० आर्यक प्रार्यक वाऽपि, बप्प चुल्लपितः ! इति च ।
मातुल भागिनेयेति, पुत्र नप्तः ! इति च ॥ १८ ॥

'अज्जए०'–आर्यक ! प्रार्यक ! इत्यादि, आर्यकः–पिता, पितामहश्च, प्रार्यकश्चापि प्रपितामहः प्रमातामहश्च, 'बप्पो'–पितेत्यर्थः, चुल्लपिउत्ति–चुल्लपिता इति, वा पितृव्यः, मातुल ! भागिनेय ! इति, पुत्र ! नप्तः ! इति च, नप्ता–पौत्रः प्रपौत्रो वा ॥ १८ ॥

हे हो हलित्ति अण्णित्ति भट्टा सामिअ गोमिअ ।
होल गोल वसुलित्ति पुरिसं नेवमालवे ॥ १९ ॥
छा० हे भो हलेति अन्येति, भट्ट, स्वामिन् गोमिन् ।
होल गोल वसुलेति, पुरुषं नैवमालपेत् ॥ १९ ॥

'हे हो०'—हे भो ! हल इति, अन्य ! इति, भर्तः ! स्वामिन् ! गोमिन् ! होल ! गोल ! वसुल ! इति पुरुषं नैवमालपेत् ॥ १९ ॥ यथा लपेत् तथाऽऽह—

नामधिज्जेण णं बूआ पुरिसगुत्तेण वा पुणो ।
जहारिहमभिगिज्झ आलविज्ज लविज्ज वा ॥ २० ॥
छा० नामधेयेन ब्रूयात्, पुरुषगोत्रेण वा पुनः ।
यथार्हमभिगृह्य, आलपेल्लपेद्वा ॥ २० ॥

'नामधिज्जेण०'—पूर्ववत्, पुरुषाभिलापेन योजना कार्या, इति विशेषः ॥ २० ॥ अथ पञ्चेन्द्रियतिर्यग्गतं वाग्विधिमाह—

पंचिंदिआण पाणाणं एस इत्थी अयं पुमं ।
जाव णं न विजाणिज्जा ताव जाइत्ति आलवे ॥ २१ ॥

छा० पञ्चेन्द्रियाणां प्राणिनाम्, एषा स्त्री, अयं पुमान्।
यावन्न विजानीयात्, तावज्जातिमित्यालपेत् ॥ २१ ॥

'पंचिंदिआण०'—'पञ्चेन्द्रियाणां प्राणिनां गवादीनां च विदूरदेशेऽवस्थितानां यथा-इयं स्त्री गौः, अयं पुमान् बलीवर्दः, यावदेतद् विशेषेण न जानीयात्, तावन्मार्गप्रश्नाऽऽदौ प्रयोजन उत्पन्ने सति 'जातिमिति'—जातिमाश्रित्याऽऽलपेत्, अस्मात्पशुटोलिकात् कियद्दूरे यथा इत्येवमादि, अन्यथा लिङ्गव्यत्ययसम्भवान्मृषावादाऽऽपत्तिः, गोपालादीनामपि विपरिणामः, इत्येवमादयो दोषाः, आक्षेपपरिहारौ वृद्धविवरणादवसेयौ, तच्चेदम्—'जइ लिंगवच्चए दोसो ता कीस पुढवाइणं नपुंसगत्ते वि पुरिसित्थिणिद्देसो पयट्टइ, जहा पत्थरो, मट्टिआ, करओ, उस्सा, मुम्मुरो, जाला, वाओ, वाउली, अंबओ, अंबिलिआ, किमिओ, जलूगा, मक्कोडओ, कीडिआ, इच्चेवमादि ?' आयरिओ आह—'जणवयसच्चेण ववहारसच्चेण य एवं पयट्टइत्ति णत्थि दोसो, पंचिंदिएसु पुण ण एअमंगीकीरइ, गोवालाईण वि ण सुदिट्ठधम्मात्ति विपरिणामसंभवाओ, पुच्छिअसामायारीकहणे वा' गुणसम्भवात् ॥ २१ ॥

तहेव मणुसं पसुं पक्खिं वा वि सरीसवं।
थूले पमेइले वज्झे पायमित्ति अ णो वए ॥ २२ ॥

छा० तथैव मानुषं पशुं, पक्षिणं वाऽपि सरीसृपम्।
स्थूलः प्रमेदुरो वध्यः, पाक्य इति च नो वदेत् ॥ २२ ॥

'तहेव०'—तथैव मनुष्यं, पशुमजाऽऽदिकं, पक्षिणं वाऽपि हंसादिकं, सरीसृपम् अजगरादिकम्, स्थूलोऽत्यन्त-

मांसलोऽयं मनुष्यादिः, तथा प्रमेदुरः—प्रकर्षेण मेदःसम्पन्नः, वध्यः—व्यापादनीयः, पाक्य इति च न वदेत्, पाक्यः—पाकप्रयोग्यः, कालप्राप्त इत्यन्ये । न वदेत्, तदप्रीतिव्यापत्त्याशङ्कादिदोषप्रसङ्गात् ॥ २२ ॥ कारणे पुनरुत्पन्ने—एवं वदेदित्याह—

परिवूढत्ति णं बूआ, बूआ उवचिअत्ति अ ।
संजाए पीणिए वा वि महाकाइत्ति आलवे ॥ २३ ॥
छा० परिवृद्ध इत्येनं ब्रूयात्, ब्रूयादुपचित इति च ।
संजातः प्रीणितो वाऽपि, महाकाय इत्यालपेत् ॥ २३ ॥

'परिवूढ०'—परिवृद्ध इत्येनं स्थूलं मनुष्यादि ब्रूयात्, तथा ब्रूयादुपचित इति, संजातः प्रीणितश्चेति, महाकाय इति चाऽऽलपेत् परिवृद्धं, पलोपचितं परिहरेदित्यादौ ॥ २३ ॥

तहेव गाओ दुज्झाओ, दम्मा गोरहगत्ति अ ।
वाहिमा रहजोगत्ति, नेवं भासिज्ज पण्णवं ॥ २४ ॥
छा० तथैव गावो दोह्याः, दम्या गोरथका इति च ।
वाह्या रथयोग्या इति, नैवं भाषेत प्रज्ञावान् ॥ २४ ॥

'तहेव०'—तथैव गावो दोह्याः—दोहाऽर्हाः, दम्याः—दमनयोग्या गोरथका इति च, गोरथकाः—कल्हो-

दक्षाः, तथा वाह्याः सामान्येन ये केचित्तानाश्रित्य रथयोग्या इति नैवं भाषेत प्रज्ञावान्, अधिकरणलाघवादिदोषात् ॥ २४ ॥ प्रयोजने त्वेवं भाषेत–इत्याह–

जुवं गवित्ति णं बूआ धेणुं रसदइत्ति अ।
रहस्से महल्लए वा वि वए संवहणित्ति अ ॥ २५ ॥
छा० युवा गौरिति ब्रूयात्, धेनुं रसदेति च।
ह्रस्वं महल्लकं वाऽपि, वदेत् संवहनमिति च ॥ २५ ॥

'जुवं०'–युवा गौरिति दम्यं गां युवेति ब्रूयात्, धेनुं–गां रसदेति ब्रूयात्, तथा ह्रस्वं महल्लकं वाऽपि-गोरथकं ह्रस्वं वाह्यं महल्लकं वदेत्, संवहनमिति रथयोग्यं संवहनं वदेत्, क्वचिद् दिगुपलक्षणादौ प्रयोजने ॥ २५ ॥

तहेव गंतुमुज्जाणं पव्वयाणि वणाणि अ।
रुक्खा महल्ल पेहाए नेवं भासिज्ज पण्णवं ॥ २६ ॥
छा० तथैव गत्वोद्यानं, पर्वतान्वनानि च।
वृक्षान्महतः प्रेक्ष्य, नैवं भाषेत प्रज्ञावान् ॥ २६ ॥

'तहेव०'–तथैव गत्वोद्यानं–जनक्रीडास्थानं तथा पर्वतान् गत्वा तथा वनानि च, तत्र वृक्षान् महतो महाप्रमाणान् प्रेक्ष्य नैवं भाषेत प्रज्ञावान् ॥ २६ ॥ कथमित्याह—

अलं पासायखंभाणं तोरणाण गिहाण य ।
फलिहग्गलनावाणं अलं उदगदोणिणं ॥ २७ ॥

छा० अलं प्रासादस्तम्भयोः, तोरणानां गृहाणां च ।
परिघार्गलानावाम्, अलमुदकद्रोणीनाम् ॥ २७ ॥

'अल०'—अल—समर्थाः प्रासादस्तम्भयोः, अत्र एकस्तम्भः प्रासादः, स्तम्भस्तु स्तम्भ एव, तोरणानां गृहाणां च, अल सर्वत्र योज्यम्, परिघार्गलानावाम्, तत्र नगरद्वारे परिघा, गोपुरकपाटादिष्वर्गला, नौः प्रतीता, आसामलमेते वृक्षाः, उदकद्रोणीनामलम्, उदकद्रोण्योऽरहट्टजलधारिकाः ॥ २७ ॥

पीढए चंगबेरे अ नंगले मइअं सिआ ।
जंतलट्ठी व नामी वा गंडिआ व अलं सिआ ॥ २८ ॥

छा० पीठकं चङ्गबेरं च, लाङ्गलं मयिकं स्यात् ।
यन्त्रयष्टिर्वा नाभिर्वा गण्डिका वाऽलं स्यात् ॥ २८ ॥

'पीढए०'—[सुपां सुपो भवन्तीति न्यायाच्चतुर्थ्यर्थे प्रथमा] पीठकाय—काष्ठासनाय, चंगबेराय (चंगबेरः)-काष्ठपात्री, तथा लाङ्गलाय—हलाय, मयिकाय—उप्तबीजाच्छादनाय, यन्त्रयष्टये या यन्त्रयष्टिः प्रसिद्धा, नाभये वा-



१ चतुर्थ्यर्थे प्रथमा—एवं सर्वेषु पदेषु ।

नाभिः—शकटतुम्बं—चक्रं तस्मै, गण्डिकायै वा अलं स्युरेते वृक्षा इति, नैवं भाषेत प्रज्ञावान् इति वर्तते, गण्डिका—सुवर्णकाराणामधिकरणी—स्थापनी भवतीति ॥ २८ ॥

आसणं सयणं जाणं हुज्जा वा किंचुवस्सए ।
भूओवघाइणिं भासं नेवं भासिज्ज पण्णवं ॥ २९ ॥

छा० आसनं शयनं यानं, भवेद्वा किञ्चिदुपाश्रये ।
भूतोपघातिनीं भाषां नैवं भाषेत् प्रज्ञावान् ॥ २९ ॥

'आसणं०'—आसनमासन्दकादि, शयनं पर्यङ्कादि, यानं वाहनादि, भवेद्वा किञ्चिदुपाश्रये—वसतौ द्वारकपाटादि—एतेषु—वृक्षेषु, इति भूतोपघातिनीं भाषां नैवं भाषेत प्रज्ञावान् । दोषांश्चात्र तद्वनस्वामी कुप्येद् व्यन्तरादिः, सलक्षणो वा वृक्ष इति गृह्णीयात्, अनियमितभाषिणो लाघवञ्चेत्येवमादयो योज्याः ॥ २९ ॥ अत्रैव विधिमाह—

तहेव गंतुमुज्जाणं पव्वयाणि वणाणि अ ।
रुक्खा महल्ल पेहाए एवं भासिज्ज पण्णवं ॥ ३० ॥

छा० तथैव गत्वोद्यानं, पर्वतान्वनानि च ।
वृक्षान्महतः प्रेक्ष्य, एवं भाषेत प्रज्ञावान् ॥ ३० ॥

'तहेव०'—तथैव गत्वोद्यानं पर्वतान् वनानि च, तत्र वृक्षान् महाप्रमाणान् वीक्ष्य एवं भाषेत प्रज्ञावान् ॥ ३० ॥

जाइमंता इमे रुक्खा दीहवट्टा महालया ।
पयायसाला विडिमा वए दरिसणित्ति अ ॥ ३१ ॥

छा० जातिमन्त इमे वृक्षाः, दीर्घवृत्ता महालयाः ।
प्रजातशाखा विटपिनः, वदेद्दर्शनीया इति च ॥ ३१ ॥

'जाइमंता०'—जातिमन्तः—उत्तमजातयोऽशोकादयोऽनेकप्रकारा एत उपलभ्यमानस्वरूपा वृक्षाः, 'दीर्घवृत्ता महालयाः'—दीर्घा नालिकेरीप्रभृतयः, वृत्ता नन्दिवृक्षादयः, महालया वटादयः, प्रजातशाखाः—उत्पन्नडालाः, विटपिनः—प्रशाखावन्तः, वदेद् दर्शनीया इति च, एतदपि प्रयोजन उत्पन्ने विश्रमणतया वाऽऽसन्नमार्गकथनादौ वदेन्नान्यदेति ॥ ३१ ॥

तहा फलाइं पक्काइं पायखज्जाइं णो वए ।
वेलोइआइं टालाइं वेहिमाइत्ति णो वए ॥ ३२ ॥

छा० तथा फलानि पक्वानि, पाकखाद्यानि नो वदेत् ।
वेलोचितानि टालानि, द्वैधिकानीति नो वदेत् ॥ ३२ ॥

'तहा फलाइं०'—तथा फलानि—आम्रफलादीनि पक्वानि—पाकप्राप्तानि, पाकखाद्यानि—बद्धाऽस्थीनीति, गर्तप्रक्षेपकोद्रवपलालादिना विपाच्य भक्षणयोग्यानीति नो वदेत्, तथा वेलोचितानि—पाकाऽतिशयतो ग्रहणकालोचितानि, अतःपरं न कालं विषहन्त इत्यर्थः, टालानि-अबद्धास्थीनि—अद्यापि कोमलानि, द्वैधिकानि इति पेशीसम्पा-

दनेन द्वैधीभावकरणयोग्यानि चेति नो वदेत्, दोषाः पुनरत्र—अत ऊर्द्ध्वं नाश एवाऽमीषां, न शोभनानि वा प्रकारान्तरभोगेन—इत्यवधार्य गृहिप्रवृत्तावधिकरणादयः ॥ ३२ ॥ प्रयोजने पुनर्मार्गदर्शनादौ—एवंवदेदित्याह—

असंथडा इमे अंबा बहु निव्वट्टिमा फला ।
वइज्ज बहुसंभूआ भूअरूवित्ति वा पुणो ॥ ३३ ॥

छा० असमर्था इमे आम्राः, बहुनिर्वर्तितफलाः ।
वदेद्बहुसंभूताः, भूतरूपा इति वा पुनः ॥ ३३ ॥

'असंथडा०'—असमर्था एते आम्राः, अतिभरेण न शक्नुवन्ति फलानि धारयितुमित्यर्थः, आम्रग्रहणं प्रधानवृक्षोपलक्षणम्, एतेन पक्काऽर्थ उक्तः, बहुनिर्वर्तितफलाः—बहूनि निर्वर्तितानि बद्धाऽस्थीनि फलानि येषु ते बहुनिर्वर्तितफलाः, अनेन पाकखाद्याऽर्थ उक्तः, वदेत्—'बहुसम्भूताः'—बहूनि सम्भूतानि पाकाऽतिशयतो ग्रहणकालोचितानि फलानि येषु ते तथा, अनेन वेलोचिताऽर्थ उक्तः, तथा भूतरूपा इति वा पुनर्वदेत्, भूतानि रूपाणि—अबद्धाऽस्थीनि कोमलफलरूपाणि येषु ते तथा, अनेन टालाद्यर्थ उपलक्षितः ॥ ३३ ॥

तहेवोसहिओ पक्काओ नीलिआओ छवीइ अ ।
लाइमा भज्जिमाउत्ति पिहुखज्जत्ति णो वए ॥ ३४ ॥

छा० तथैवौषधयः पक्काः, नीलिकाश्छवय इति च ।
लवनीया भर्जनीया इति, पृथुकखाद्या इति नो वदेत् ॥ ३४ ॥

'तहेवो०'–तथैवौषधयः शाल्यादिरूपाः पक्का इति, नीलाश्छवय इति वा वल्लचवलकादिफललक्षणाः, तथा लवनवत्यः–लवनयोग्याः, भर्जनवत्यः–भर्जनयोग्याः, पृथुकभक्ष्या इति नो. वदेत्–बालकभक्षणयोग्या इति न कथयेत् ॥ ३४ ॥ प्रयोजने पुनर्मार्गदर्शनादावेवमालपेदित्याह–

रूढा बहुसंभूआ थिरा ऊसढा वि अ ।
गब्भिआओ पसूआओ ससाराउत्ति आलवे ॥ ३५ ॥

छा० रूढा बहुसम्भूताः, स्थिरा उत्सृता अपि च ।
गर्भिताः प्रसूताः, ससारा इत्यालपेत् ॥ ३५ ॥

'रूढा०'–रूढाः रमेति रूढाः–प्रादुर्भूताः, बहुसम्भूताः–निष्पन्नप्रायाः, स्थिराः–निष्पन्नाः, उत्सृता इति उपघातेभ्यो निर्गता इति वा, गर्भिताः–अनिर्गतशीर्षकाः, प्रसूताः–निर्गतशीर्षकाः, ससाराः–संजाततन्दुलाऽऽदिसाराः, इत्येवमादि लपेत् पक्काऽऽर्थाद्यर्थयोजना स्वधिया कार्या ॥ ३५ ॥ वाग्विधिप्रतिषेधाऽधिकारेऽनुवर्तमान इदमपरमाह–

तहेव संखडिं नच्चा किच्चं कज्जं ति णो वए ।
तेणगं वा वि वज्झित्ति सुतित्थित्ति अ आवगा ॥ ३६ ॥

छा० तथैव संखडीं ज्ञात्वा, कृत्यं कार्यमिति नो वदेत् ।
स्तेनकं वाऽपि वध्य इति, सुतीर्था इति चाऽऽपगाः ॥ ३६ ॥

'तहेव०'–तथैव संखडीं ज्ञात्वा–संखण्ड्यन्ते प्राणिनामायूंषि यस्यां सा संखडी तां ज्ञात्वा, करणीयेति

चित्रादिनिमित्तं कृत्यैवैषेति नो वदेत्, मिथ्यात्वोपबृंहणदोषात्, तथा स्तेनकं वापि वध्य इति नो वदेत्, तदनुमतत्वेन निश्चयादि-दोषप्रसङ्गात्, सुतीर्था इति च, 'च'-शब्दाद् दुस्तीर्था इति वा, आपगाः-नद्यः केनचित्पृष्टः सन् न वदेत्, अधिकरणविघातादिदोषप्रसङ्गात् ॥ ३६ ॥ प्रयोजन एवं वदेदित्याह—

संखडिं संखडिं बूआ पणिअट्ठित्ति तेणगं ।
बहुसमाणि तित्थाणि आवगाणं विआगरे ॥ ३७ ॥

छा० संखडीं संखडीं ब्रूयात्, पणितार्थ इति स्तेनकम् ।
बहुसमानि तीर्थानि, आपगानां व्यागृणीयात् ॥ ३७ ॥

'संखडिं०'—संखडीं संखडीं ब्रूयात् साधुकथनादौ सङ्कीर्णा संखडीत्येवमादि, पणितार्थ इति स्तेनकं वदेत्, शिक्षकादिकर्मविपाकदर्शनादौ पणितेनाऽर्थोऽस्येति पणितार्थः, प्राण(पण)द्यूतप्रयोजन इत्यर्थः, बहुसमानि तीर्थान्यापगानां—नदीनां व्यागृणीयात्साध्वादिविषये ॥ ३७ ॥ अत्रैवाऽधिकारे चेदमाह—

तहा नईओ पुण्णाओ कायतिज्जत्ति णो वए ।
नावाहिं तारिमाउत्ति पाणिपिज्जत्ति णो वए ॥ ३८ ॥

छा० तथा नद्यः पूर्णाः, कायतार्या इति नो वदेत् ।
नौभिस्तरणीया इति, प्राणिपेया इति नो वदेत् ॥ ३८ ॥

'तहा०'—तथा नद्यः पूर्णा भृता इति नो वदेत्, प्रवृत्तश्रमणनिवर्तनादिदोषात्, कायतरणीयाः—शरीर-

तरणयोग्या इत्येवं नो वदेत्, साधुवचनतोऽविघ्न इति प्रवर्तनादिदोषप्रसङ्गात्, तथा नौभिस्तरणयोग्या इत्येवं नो वदेत्, प्राणिपेयाः—तटस्थप्राणिपेया इति नो वदेत्, तथैव प्रवर्तनादिदोषात् ॥३८॥ साधुमार्गकथनादावेवं वदेदित्याह—

बहुवाहडा अगाहा बहुसलिलुप्पिलोदगा ।
बहुवित्थडोदगा या वि एवं भासिज्ज पण्णवं ॥ ३९ ॥

छा० बहुभृता अगाधाः, बहुसलिलोत्पीडोदकाः ।
बहुविस्तृतोदकाश्चाऽपि, एवं भाषेत प्रज्ञावान् ॥ ३९ ॥

'बहु०'—बहुभृताः—प्रायशो भृताः, अगाधाश्च—प्रायो गम्भीराः, बहुसलीलोत्पीलोदकाः—बहुसलिलानामुत्पीलं— पश्चादुद्वलमुदकं यासां ता बहुसलिलोत्पीलोदकाः, पश्चान्मुखं वाहिताः परनय इत्यर्थः । बहुविस्तीर्णोदकाश्च—स्वतीरप्लावनप्रवृत्तजलाश्च, एवं भाषेत प्रज्ञावान्, न तु तदागतपृष्टो न वेद्मि—अहमिति ब्रूयात्, प्रत्यक्षमृषावादित्वेन तत्प्रद्वेषादिदोषप्रसङ्गात् ॥ ३९ ॥ वाग्विधिप्रतिषेधाऽधिकार एवेदमाह—

तहेव सावज्जं जोगं परस्सट्ठाए णिट्ठिअं ।
कीरमाणं ति वा नच्चा सावज्जं न लवे मुणी ॥ ४० ॥

छा० तथैव सावद्यं योगं, परस्यार्थाय निष्ठितम् ।
क्रियमाणमिति वा ज्ञात्वा, सावद्यं नालपेन्मुनिः ॥ ४० ॥

'तहेव०'–तथैव सावयं योगं–व्यापारं परस्यार्थाय–परनिमित्तं निष्ठितं, तथा क्रियमाणं वा–वर्तमानं, 'वा'–शब्दाद् भविष्यत्काले भाविनं वा ज्ञात्वा सावयं नालपेन्मुनिः ॥ ४० ॥ तत्र निष्ठितं नैवं ब्रूयादित्याह—



सुकडित्ति सुपक्किक्ति सुछिण्णे सुहडे मडे ।
सुणिट्ठिए सुलट्ठित्ति सावज्जं वज्जए मुणी ॥ ४१ ॥

छा० सुकृतमिति सुपक्कमिति, सुच्छिन्नं सुहृतं मृतः(तम्) ।
सुनिष्ठितं सुलष्टेति, सावद्यं वर्जयेन्मुनिः ॥ ४१ ॥

'सुकडित्ति०'–सुकृतमिति–सुष्ठु कृतं सभादि, सुपक्कमिति–सहस्रपाकादि, सुच्छिन्नमिति वनादि, सुहृतमिति–क्षुद्रस्य चि(वि)त्तम्, सुमृतः प्रत्यनीकः, सुरत्राऽप्यनुवर्तते, सुनिष्ठितमिति वित्ताऽभिमानिनां वित्तम्, सुलष्टेति सुन्दरी कन्या, एवं साऽवद्यं वर्जयेन्मुनिः, अनुमत्यादिदोषप्रसङ्गात्, निरवद्यं तु न वर्जयेत्, यथा–सुकृतमिति–सुकृतमनेन वैय्यावृत्यादि, सुपक्कं ब्रह्मचर्यं साधोः, सुच्छिन्नं स्नेहबन्धनमनेन, सुहृतमुपकरणम् उपसर्गे, सुमृतः पण्डितमरणेन, सुनिष्ठितं कर्म अप्रमत्तसाधोः, सुलष्टा क्रिया ते, इत्येवमादीनि असावद्यानि ब्रूयात् ॥ ४१ ॥ उक्ताऽनुक्ताऽपवादाविधिमाह—



पयत्तपक्कित्ति अ पक्कमालवे ।
पयत्तछिण्णित्ति अ छिण्णमालवे ॥

पयत्तछद्वित्ति व कम्महेउअं ।
पहारगाढित्ति व गाढमालवे ॥ ४२ ॥

छा० प्रयत्नपक्कमिति च पक्कमालपेत् ।
प्रयत्नच्छिन्नमिति च छिन्नमालपेत् ॥
प्रयत्नलष्टेति वा कर्महेतुकम् ।
प्रहारगाढमिति वा गाढमालपेत् ॥ ४२ ॥

'पयत्त०'–प्रयत्नपक्कमेतत् पक्क सहस्रपाकादि ग्लानप्रयोजने एवमालपेत्, प्रयत्नच्छिन्नमिति वा छिन्नमालपेत्, प्रयत्नच्छिन्न मणा(वना)ऽऽदि, प्रयत्नलष्टेति वा प्रयत्नसुन्दरी कन्या दीक्षिता सती सम्यक् पालनीया, कर्महेतुकमिति सर्वमेव कृताऽऽदि कर्मनिमित्तमालेपत्, गाढप्रहारमिति वा गाढमालपेत्–गाढप्रहारं ब्रूयात् कचित्प्रयोजने, एवं हि तदप्रीत्यादयो दोषाः परिहृताः स्युः ॥ ४२ ॥ व्यवहारे केनाऽपि पृष्टोऽपृष्टो वा नैव वदेदित्याह—

सव्वुक्कसं परग्घं वा अउलं नत्थि एरिसं ।
अविक्किअमवत्तव्वं अचिअत्तं चेव णो वए ॥ ४३ ॥

छा० सर्वोत्कर्षं परार्घं वा, अतुलं नास्तीदृशम् ।
अविकृतमवक्तव्यम्, अप्रीतिकरं चैव नो वदेत् ॥ ४३ ॥

'सव्वुकसं०'—सर्वोत्कृष्टमिदं स्वभावेन सुन्दरमित्यर्थः, पराऽर्घं वा उत्तमाऽर्घं वा महाऽर्घं क्रीतमिति भावः, अतुलं—नाऽस्तीदृशमन्यत्राऽपि क्वचित्, 'अविकिएत्ति'—असंस्कृत सुलभमीदृशं सर्वत्राऽपि, अवक्तव्यम्—अनन्तगुणमेतत्, 'अचियत्तं' वा—अप्रीतिकरं चैतदिति नो वदेत्, अधिकरणाऽन्तरायाऽऽदिदोषप्रसङ्गात् ॥ ४३ ॥



सव्वमेअं वइस्सामि सव्वमेअं ति णो वए ।
अणुवीअ सव्वं सव्वत्थ एवं भासिज्ज पण्णवं ॥ ४४ ॥
छा० सर्वमेतद्वदिष्यामि, सर्वमेतदिति नो वदेत् ।
अनुविविच्य सर्वं सर्वत्र, एवं भाषेत प्रज्ञावान् ॥ ४४ ॥

'सव्वमेअं०'—'सर्वमेतत्सन्देशाऽऽदिकं कथयेः साधोः' इति परेण सन्दिष्टे सर्वमेतद्वक्ष्यामीति नो वदेत्, सर्वस्य स्वरव्यञ्जनाद्युपेतस्य वक्तुमशक्यत्वात्, सर्वमेतदित्येवं वक्तव्यमिति नो वदेत्, सर्वस्य स्वरादियुक्तस्य वक्तुमशक्यत्वात्, (असंभवाऽभिधाने मृषावादः), अतः—'अणुवीअ'—'अनुविचिन्त्य सर्वं वाच्यं सर्वत्र—कार्येषु यथाऽसम्भवाऽभिधानादिना मृषावादो न भवत्येवं भाषेत प्रज्ञावान् ॥ ४४ ॥ किञ्च—

सुक्कीअं वा सुविक्कीअं अकिज्जं किज्जमेव वा ।
इमं गिण्ह इमं मुंच पणिअं णो विआगरे ॥ ४५ ॥



---

१ 'अन्यत्राऽपि' इति पाठान्तरम् ।

छा० सुक्रीतं वा सुविक्रीतम्, अक्रेयं क्रेयमेव वा ।
इदं गृहाणेदं मुञ्च, पणितं नो व्यागृणीयात् ॥ ४५ ॥

'सुक्रीयं०'—सुक्रीतं वेति किञ्चित् केनचित् क्रीतं दर्शितं सत् क्रीतमिति न व्यागृणीयात्, सुविक्रीतमिति न व्यागृणीयात्, अक्रेयं क्रेयमेव वा, इदं पण्यं गृहाण—महर्घ्यं भविष्यति, इदं मुञ्च समर्घ्यं भावीति पणितं—पण्यं न व्यागृणीयात्, अप्रीत्यधिकरणादिदोषप्रसङ्गात् ॥ ४५ ॥

अप्पग्घे वा महग्घे वा कए वा विक्कए वि वा ।
पणिअट्ठे समुप्पण्णे अणवज्जं विआगरे ॥ ४६ ॥

छा० अल्पार्घे वा महार्घे वा, क्रये वा विक्रयेऽपि वा ।
पणितार्थे समुत्पन्ने, अनवद्यं व्यागृणीयात् ॥ ४६ ॥

'अप्पग्घे०'—अल्पाऽर्घे वा महाऽर्घे वा, कस्मिंश्चित्याह, क्रये वा विक्रयेऽपि वा, पणिताऽर्थे—पण्यवस्तुनि समुत्पन्ने केनचित्पृष्टः सन्, अनवद्यं व्यागृणीयात्, यथा—नाऽधिकारोऽत्र तपस्विनां व्यापाराऽभावात् ॥ ४६ ॥

तहेवासंजयं धीरो आस एहि करेहि वा ।
सय चिट्ठ वयाहित्ति नेवं भासिज्ज पण्णवं ॥ ४७ ॥

छा० तथैवाऽसंयतं धीरः, आस्स्वेहि कुरु वा ।
शेष्व तिष्ठ व्रजेति, नैवं भाषेत प्रज्ञावान् ॥ ४७ ॥

'तहेवा०'—तथैवाऽसंयतं मति धीरः—संयतः—आस्स्व इहैव, एहि इतोऽत्र, कुरु वेदं सञ्चयादि, शेष्व निद्रया, तिष्ठोर्द्धस्थानेन, व्रज ग्राममिति, नैवं भाषेत प्रज्ञावान् ॥ ४७ ॥

बहवे इमे असाहू लोए वुच्चंति साहुणो ।
न लवे असाहुं साहुत्ति साहुं साहुत्ति आलवे ॥ ४८ ॥

छा० बहव इमेऽसाधवः, लोके उच्यन्ते साधवः ।
न लपेदसाधुं साधुरिति, साधुं साधुरित्यालपेत् ॥ ४८ ॥

'बहवे०'—बहव एते उपलभ्यमानस्वरूपा आजीवकादयोऽसाधवो निर्वाणसाधकयोगाऽपेक्षया, लोकेऽत्र प्राणिसंघाते उच्यन्ते साधवः, सामान्येन तत्र नाऽऽलपेद् असाधुं साधुं, मृषावादप्रसङ्गात्, अपि तु साधुं साधुमालपेत्, न तु तमपि नाऽऽलपेत्, उपबृंहणाऽतिचारदोषप्रसङ्गात् ॥ ४८ ॥ किंविशिष्टं साधुं साधुमालपेदित्याह—

नाणदंसणसंपण्णं संजमे अ तवे रयं ।
एवंगुणसमाउत्तं संजयं साहुमालवे ॥ ४९ ॥

छा० ज्ञानदर्शनसम्पन्नं, संयमे च तपसि रतम् ।
एवंगुणसमायुक्तं, संयतं साधुमालपेत् ॥ ४९ ॥

'नाण०'—ज्ञानदर्शनसम्पन्नं संयमे तपसि च रतम्—एवंगुणसमायुक्तं संयतं साधुमालपेत् ॥ ४९ ॥

देवाणं मणुआणं च तिरिआणं च विग्गहे ।
अमुआणं जओ होउ मा वा होउत्ति णो वए ॥ ५० ॥

छा० देवानां मनुजानाञ्च, तिरश्चां च विग्रहे ।
अमुकेषां जयो भवतु, मा वा भवतु, इति नो वदेत् ॥ ५० ॥

'देवाणं०'—देवानां मनुजानाञ्च तिरश्चां च—महिष्यादीनां विग्रहे—संग्रामे सति 'अमुकानां ( अमुकेषां ) देवादीनां जयो भवतु' इति नो वदेत्, अधिकरणतत्स्वाम्यादिद्वेषदोषप्रसङ्गात् ॥ ५० ॥ किञ्च—

वाओ वुट्ठं च सीउण्हं खेमं धायं सिवं ति वा ।
कयाणु हुज्ज एआणि मा वा होउत्ति णो वए ॥ ५१ ॥

छा० वातो वृष्टं च शीतोष्णं, क्षेमं ध्मातं शिवमिति वा ।
कदानु भवेयुरेतानि, मा वा भवेयुरिति नो वदेत् ॥ ५१ ॥

'वाओ०'—वातः—मलयमारुतादिः, वृष्टं वा—वर्षणं, शीतोष्णं, क्षेमं—राजविड्वरशून्यं, ध्मातं—सुभिक्षं, शिवमिति वा—उपसर्गरहितं, कदानु भवेयुरेतानि वातादीनि, मा वा भवेयुरिति नो वदेद् धर्माधिभूतः, अधिकरणादिदोषप्रसङ्गात्, वातादिषु सत्सु सत्त्वपीडाऽऽपत्तेः, तद्वचनतस्तथाऽऽसेवनेऽप्यार्तध्यानभावादिति ॥ ५१ ॥

१ 'तदुक्तेस्तथाऽभवनेऽप्यार्तध्यानात्' इति द्वितीयप्रतिस्थपाठः ।

तहेव मेहं व णहं व माणवं ।
न देव देवत्ति गिरं वइज्जा ॥
समुच्छिए उण्णए वा पओए ।
वइज्ज वा वुट्ठे वलाहइत्ति ॥ ५२ ॥

छा० तथैव मेघं वा नभो वा मानवं ।
न देव देव इति गिरं वदेत् ॥
सम्मूर्छित उन्नतो वा पयोदः ।
वदेद्वा वृष्टो बलाहक इति ॥ ५२ ॥

'तहेव०'-तथैव मेघं वा नभो वा मानवं वा आश्रित्य नो देव देव इति गिरं वदेत्, मिथ्यावादलाघवादिदोषप्रसङ्गात् । कथं वदेदित्याह- उन्नतं दृष्ट्वा 'संमूर्च्छित उन्नतो वा पयोदः', वदेद्वा-वृष्टो बलाहक इति ॥ ५२ ॥ नभ आश्रित्याह-

अंतलिक्खत्ति णं बूआ गुज्झाणुचरिअत्ति अ ।
रिद्धिमंतं नरं दिस्स रिद्धिमंतं ति आलवे ॥ ५३ ॥

छा० अन्तरिक्षमिति ब्रूयात्, गुह्यानुचरितमिति च ।
ऋद्धिमन्तं नरं दृष्ट्वा, ऋद्धिमन्तमित्यालपेत् ॥ ५३ ॥

'अंतलिक्ख०'—अन्तरिक्ष इति ब्रूयात्, गुह्याऽनुचरितमिति वा, सुरसेवितमित्यर्थः, ऋद्धिमन्तं—सम्पदुपेतं नरं दृष्ट्वा ऋद्धिमन्तमित्यालपेत् ॥ ५३ ॥

तहेव सावज्जणुमोइणी गिरा ।
ओहारिणी जा य परोवघाइणी ॥
से कोह लोह भयसा व माणवो ।
न हासमाणो वि गिरं वइज्जा ॥ ५४ ॥

छा० तथैव सावद्याऽनुमोदिनी गीः ।
अवधारिणी या च परोपघातिनी ॥
तां क्रोधाल्लोभाद्भयाद्वा मानवः ।
न हसन्नपि गिरं वदेत् ॥ ५४ ॥

'तहेव०'—तथैव सावद्याऽनुमोदिनी गीः—वाक्, यथा—सुष्ठु हतो ग्राम इति, अवधारिणी—इदमित्थमेवेति, या च परोपघातिनी, यथा—मांसमदोषाय सेव्यताम्, एवम्भूतां क्रोधाल्लोभाद् भयाद्धासाद्वा, मानप्रेमादीनामुपलक्षणमेतत्, मानवः—साधुर्न हसन्नपि गिरं वदेत्, प्रभूतकर्मबन्धहेतुत्वात् ॥ ५४ ॥ वाक्यशुद्धिफलमाह—

सवक्कसुद्धिं समुपेहिआ मुणी ।
गिरं च दुट्ठं परिवज्जए सया ॥
मिअं अदुट्ठं अणुवीअ भासए ।
सयाणमज्झे लहइ पसंसणं ॥ ५५ ॥

छा० सद्वा(स्ववा)क्यशुद्धिं सम्प्रेक्ष्य मुनिः ।
गिरं च दुष्टां परिवर्जयेत्सदा ॥
मितमदुष्टमनुविविच्य भाषकः ।
सतां मध्ये लभते प्रशंसनम् ॥ ५५ ॥

'सवक्कसुद्धिं०'—सद्वाक्यशुद्धिं स्ववाक्यशुद्धिं सवाक्यशुद्धिं वा, सतीं—शोभनां, स्वामात्मीयां, स इति वक्ता, वाक्यशुद्धिं सम्प्रेक्ष्य मुनिः, 'गिरं तु दुष्टां परिवर्जयेत्सदा', मितामदुष्टामनुचिन्त्य भाषमाणः सन् सतां—साधूनां मध्ये लभते प्रशंसनम् ॥ ५५ ॥

भासाइ दोसे अ गुणे अ जाणिआ ।
तीसे अ दुट्ठे परिवज्जए सया ॥
छसु संजए सामणिए सया जए ।
वइज्ज बुद्धे हिअमाणुलोमिअं ॥ ५६ ॥

छा० भाषाया दोषाँश्च गुणाँश्च ज्ञात्वा ।
तस्याश्च दुष्टान्परिवर्जयेत्सदा ॥
षट्सु संयतः श्रामण्ये सदा यतः ।
वदेद्बुद्धो हितमानुलोमिकम् ॥ ५६ ॥

'भासाइ०'—अतो भाषाया दोषांश्च गुणांश्च ज्ञात्वा तस्याश्च दुष्टाया भाषायाः परिवर्जकः सदा एवम्भूतः षट्सु जीवनिकायेषु संयतः, श्रामण्ये—श्रमणभावे (सदा यतः सन्, हितं—) चरणपरिणामसुन्दरम्, आनुलोमं—मनोहारि वदेत् ॥ ५६ ॥ उपसंहरन्नाह—

परिक्खभासी सुसमाहिइंदिए ।
चउक्कसायावगए अणिस्सिए ॥
स णिद्धुणे धुण्णमलं पुरेकडं ।
आराहए लोगमिणं तहा परं ॥ ५७ ॥ त्ति बेमि ।

छा० परीक्ष्यभाषी सुसमाहितेन्द्रियः ।
चतुष्कषायापगतोऽनिश्रितः ॥
स निर्धुनुयात्(निर्धूय) धुतमलं पुराकृतम् ।
आराधयेल्लोकमिमं तथा परम् ॥ ५७ ॥ इति ब्रवीमि ।

'परिक्ख०'—परीक्ष्यभाषी सुसमाहितेन्द्रियः, अपगतचतुष्कषायः, क्रोधादिनिरोधकर्तेतिभावः, अनिश्रितः—निश्रारहितः, स इत्थम्भूतो निर्धूय—प्रस्फोट्य धूनमलं—पापमलं पुराकृतम्, आराधयति लोकमेनं—मनुष्यलोकम्, तथा परम्—परलोकमाराधयति—निर्वाणं प्रगुणीकरोति। ब्रवीमीति पूर्ववत् ॥५७॥ इति वाक्यशुद्ध्यध्ययनस्य सप्तमस्याऽवचूरिः।



॥ वक्कसुद्धि अज्झयणं सत्तमं ॥

॥ इति वाक्यशुद्ध्यध्ययनं सप्तमम् ॥



# ॥ अथाऽष्टमाध्ययनम् ॥



अनन्तराऽध्ययने साधुना निरवद्यवचसा वक्तव्यमित्युक्तम्, इह तु तन्निरवद्यं वच आचारे प्रणिहितस्य भवतीति तत्र यत्नवता भवितव्यमित्येतदुच्यते, उक्तञ्च—

"पणिहाणरहिअस्सेह, निरवज्ज पि भासिअं ।
सावज्जतुल्लं विण्णेअं, अज्झत्थेणेह संवुडं" ॥ १ ॥

इत्यनेन सम्बन्धेनाऽऽयातमिदमध्ययनम् ।

**आयारप्पणिहिं लद्धुं जहा कायव्व भिक्खुणा ।**
**तं भे उदाहरिस्सामि आणुपुव्विं सुणेह मे ॥ १ ॥**

छा० **आचारप्रणिधिं लब्ध्वा, यथा कर्तव्यं भिक्षुणा ।**
**तं भवद्भ्य उदाहरिष्यामि, आनुपूर्व्या शृणुत मत् ॥ १ ॥**

'आयार०'—आचारस्य प्रकृष्टो निधिः--प्रणिधिः, तं लब्ध्वा यथा येन प्रकारेण कर्तव्यं विहिताऽनुष्ठानं भिक्षुणा, तं प्रकारं भे—भवद्भ्य उदाहरिष्यामि, आनुपूर्व्या शृणुत ममेति गौतमादयः स्वशिष्यानाहुः ॥ १ ॥ तं प्रकारमाह—

पुढवी–दग–अगणि–मारुअ–तण–रुक्ख सबीअगा।
तसा य पाणा जीवत्ति इअ वुत्तं महेसिणा ॥ २ ॥

छा० पृथ्व्युदकाऽग्निमारुततृणवृक्षाः सबीजकाः।
त्रसाश्च प्राणिनो जीवा इति, इत्युक्तं महर्षिणा ॥ २ ॥

'पुढवी०'—पृथिव्युदकाऽग्निवायुतृणवृक्षसबीजाः, त्रसाश्च प्राणिनो जीवा इत्युक्तं महर्षिणा—वर्द्धमानेन ॥२॥

यतश्चैवमतः—

तेसिं अच्छणजोएण निच्चं होअव्वअं सिआ।
मणसा काय वक्केण एवं भवइ संजए ॥ ३ ॥

छा० तेषामक्षणयोगेन, नित्यं भवितव्यं स्यात्।
मनसा कायेन वाक्येन, एवं भवति संयतः ॥ ३ ॥

'तेसिं०'—तेषां पृथिव्यादीनामक्षणयोगेन—अहिंसाव्यापारेण नित्यं भवितव्यं स्याद् भिक्षुणा मनसा कायेन वाक्येन, एभिः करणैरित्यर्थः, एवं वर्तमानः संयतो भवति नाऽन्यः ॥ ३ ॥ षड्जीवस्वरूपं सामान्येनाऽभिधाय विशेषेणाऽऽह—

१ 'इतेः इय वाक्यारम्भे' अस्मात्सूत्रात् 'इइ' इति स्थाने 'इअ' इति भवति।

२ 'षड्जीवनिकायाऽहिंसया संयतत्वमभिधायाऽधुना तद्गतविधीन्विधानतो विशेषेणाह' इत्यपि प्रत्यन्तरे।

पुढवीं भित्तिं सिलं लेलुं नेव भिंदे न संलिहे ।
तिविहेण करणजोएण संजए सुसमाहिए ॥ ४ ॥
छा० पृथ्वीं भित्तिं शिलां लेष्टुं, नैव भिन्द्यान्न संलिखेत् ।
त्रिविधेन करणयोगेन, संयतः सुसमाहितः ॥ ४ ॥

'पुढवीं०'—पृथिवीं भित्तिं शिलां लेष्टुं नैव भिन्यात्, न संलिखेत् त्रिविधेन करणयोगेन संयतः सुसमाहितः ॥ ४ ॥

सुद्धपुढवीं न निसीए ससरक्खम्मि अ आसणे ।
पमज्जित्तु निसीइज्जा जाइत्ता जस्स उग्गहं ॥ ५ ॥
छा० शुद्धपृथ्व्यां न निषीदेत्, सरजस्के चाऽऽसने ।
प्रमार्ज्य निषीदेत्, याचित्वा यस्याऽवग्रहम् ॥ ५ ॥

'सुद्धपुढवीं०'—शुद्धपृथिव्यामशस्त्रोपहतायां न निषीदेत्, निषीदनग्रहणात् स्थानत्वग्वर्तनपरिग्रहः, सरजस्के वा (च) आसने—पीठकादौ, अचेतनायां तु प्रमृज्य तां रजोहरणेन निषीदेत्, याचयित्वा यस्याऽवग्रहम् ॥ ५ ॥
अप्काये विधिमाह—

सीओदगं न सेविज्जा सिलावुट्ठं हिमाणि अ ।
उसिणोदगं तत्तफासुअं पडिगाहिज्ज संजए ॥ ६ ॥
छा० शीतोदकं न सेवेत, शिलावृष्टं हिमानि च ।
उष्णोदकं तप्तप्राशुकं, प्रतिगृह्णीयात् संयतः ॥ ६ ॥

'सीओदगं०'—शीतोदकं—पृथिव्युद्भवं सचित्तोदकं न सेवेत, शिलावृष्टं हिमानि च—शिलाः—करकाः, वृष्टं—वर्षणम्, हिमं प्रतीतम्, यद्येवं कथमयं वर्तेत ? इत्याह—उष्णोदकं—क्वथितोदकं, तप्तप्रासुकं—त्रिदण्डोद्वृत्तं, नोष्णोदकमात्रं, परिगृह्णीयात्—वृत्त्यर्थं संयतः, एतच्च सौवीराद्युपलक्षणमिति ॥ ६ ॥

उदउल्लं अप्पणो कायं नेव पुंछे न संलिहे ।
समुप्पेह तहाभूअं णो णं संघट्टए मुणी ॥ ७ ॥
छा० उदकार्द्रमात्मनः कायं, नैव प्रोञ्छयेन्न संलिखेत् ।
समुत्प्रेक्ष्य तथाभूत, नो संघट्टयेन्मुनिः ॥ ७ ॥

'उदउल्लं०'—उदकार्द्रमात्मनः कायं नैव प्रोञ्छयेद्वस्त्रतृणादिभिः, न संलिखेत्पाणिना, अपि तु संप्रेक्ष्य तथाभूतं नैनं कायं संघट्टयेत्—मुनिर्मनागपि न स्पृशेत् ॥ ७ ॥ तेजःकायविधिमाह—

इंगालं अगणिं अच्चिं अलायं वा सजोइअं ।
न उंजिज्जा न घट्टिज्जा णो णं निव्वावए मुणी ॥ ८ ॥

छा० अङ्गारमग्निमर्चिः, अलातं वा सज्योतिः ।
नोत्सिञ्चेन्न घट्टयेत्, नो निर्वापयेन्मुनिः ॥ ८ ॥

'इंगालं०'—अङ्गारं—ज्वालारहितम्, अग्निम्—अयःपिण्डाऽनुगतम्, अर्चिः—छिन्नज्वालम्, अलातं वा—उल्मुकम्, सज्योतिः—साऽग्निकमित्यर्थः, नोत्सिञ्चेत्, न घट्टयेत्, नैनं निर्वापयेन्मुनिः ॥ ८ ॥ वायुकायविधिमाह—

तालिअंटेण पत्तेण साहाविहुअणेण वा ।
न वीइज्ज अप्पणो कायं बाहिरं वा वि पुग्गलं ॥ ९ ॥

छा० तालवृन्तेन पत्रेण, शाखाविधुननेन वा ।
न व्यजेदात्मनः कायं, बाह्यं वाऽपि पुद्गलम् ॥ ९ ॥

'तालिअं०'—तालवृन्तेन—व्यजनविशेषेण, पत्रेण—पद्मिणीपत्रादिना, शाखया—वृक्षडालरूपया, विधुननेन व्यजनेन वा न व्यजेदात्मनः कायं बाह्यं वाऽपि पुद्गलमुष्णोदकादि ॥ ९ ॥ वनस्पतिकायविधिमाह—



तणरुक्खं न छिंदिज्जा फलं मूलं व कस्सइ ।
आमगं विविहं बीअं मणसा वि न पत्थए ॥ १० ॥

छा० तृणवृक्षं न छिन्द्यात्, फलं मूलं वा कस्यचित् ।
आमकं विविधं बीजं, मनसाऽपि न प्रार्थयेत् ॥ १० ॥

'तण०'—तृणवृक्षमित्येकवद्भावः, तृणानि—दर्भादीनि, वृक्षाः—कदम्बादयः, एतान् न छिन्द्यात्, फलं मूलं वा कस्यचिद्वृक्षादेर्न छिन्द्यात्, आमकम्—अशस्त्रोपहतं विविधं बीजं मनसाऽपि न प्रार्थयेत् ॥ १० ॥

गहणेसु न चिट्ठिज्जा बीएसु हरिएसु वा ।
उदगम्मि तहा निच्चं उत्तिंगपणगेसु वा ॥ ११ ॥

छा० गहनेषु न तिष्ठेत्, बीजेषु हरितेषु वा ।
उदके तथा नित्यम्, उत्तिङ्गपणकेषु वा ॥ ११ ॥

'गहणेसु०'—गहनेषु—वननिकुञ्जेषु न तिष्ठेत्, संघट्टनादिदोषप्रसङ्गात्, बीजेषु—प्रसारितशाल्यादिषु हरितेषु—दूर्वादिषु न तिष्ठेत्, उदके तथा नित्यम्, अत्रोदकमनन्तवनस्पतिविशेषः, यथोक्तम्—"उदए अवए पणए" इत्यादि, उदकमेवाऽन्ये, तत्र नियमतो वनस्पतिभावात्, उत्तिङ्गपनकयोर्वा न तिष्ठेत्, तत्रोत्तिङ्गः—सर्पच्छत्राऽऽदिः पनकः—उल्लिवनस्पतिः ॥ ११ ॥ त्रसकायविधिमाह—

तसे पाणे न हिंसिज्जा वाया अदुव कम्मुणा ।
उवरओ सव्वभूएसु पासिज्ज विविहं जगं ॥ १२ ॥

छा० त्रसान्प्राणिनो न हिंस्यात्, वाचाऽथवा कर्मणा ।
उपरतः सर्वभूतेषु, पश्येद्विविधं जगत् ॥ १२ ॥

'तसे०'—त्रसान् प्राणिनो न हिंस्यात्, वाचाऽथवा कर्मणा—कायेन, मनसस्तदन्तर्गतत्वादग्रहणम्, उपरतः—निवृत्तो हिंसातः सर्वभूतेषु, पश्येद्विविधं जगत्कर्मपरतन्त्रं निर्वेदायेति ॥ १२ ॥ उक्तः स्थूलविधिः, सूक्ष्मविधिमाह—

अट्ठ सुहुमाइं पेहाए जाइं जाणित्तु संजए ।
दयाहिगारी भूएसु आस चिट्ठ सएहि वा ॥ १३ ॥

छा० अष्टौ सूक्ष्माणि प्रेक्ष्य (प्रेक्षया), यानि ज्ञात्वा संयतः ।
दयाधिकारी भूतेषु, आस्तां तिष्ठतु शेतां वा ॥ १३ ॥

'अट्ठ०'—अष्टौ सूक्ष्माणि वक्ष्यमाणानि प्रेक्ष्योपयोगत आसीत, तिष्ठेत्, शयीत वेतियोगः, किं विशिष्टानीत्याह—यानि ज्ञात्वा संयतो दयाऽधिकारी भूतेषु भवति ॥ १३ ॥ आह—



कयराइं अट्ठसुहुमाइं जाइं पुच्छिज्ज संजए ।
इमाइं ताइं मेहावी आयक्खिज्ज विअक्खणो ॥ १४ ॥

छा० कतरान्यष्टसूक्ष्माणि, यानि पृच्छेत् संयतः ।
एतानि तानि मेधावी, आचक्षीत विचक्षणः ॥ १४ ॥

'कयरा०'–कतरान्यष्टौ सूक्ष्माणि यानि दयाऽधिकारित्वाऽभावभयात्पृच्छेत्संयतः ? अमूनि तान्यनन्तरं वक्ष्यमाणानि मेधावी–आचक्षीत, विचक्षण इत्यनेनैतदाह–मर्यादावर्तिना तज्ज्ञेन तत्प्ररूपणा कार्या, एवं हि श्रोतुस्तत्रोपादेयबुद्धिर्भवति, अन्यथा विपर्ययः ॥ १४ ॥

सिणेहं पुप्फसुहुमं च पाणुत्तिंगं तहेव य ।
पणगं बीअहरिअं च अंडसुहुमं च अट्ठमं ॥ १५ ॥

छा० स्नेहं पुष्पसूक्ष्मं च, प्राणोत्तिङ्गं तथैव च ।
पणकं बीजहरितं च, अण्डसूक्ष्मं चाष्टमम् ॥ १५ ॥

'सिणेहं०'–स्नेहमिति स्नेहसूक्ष्मम्–अवश्यायहिममिहिकाकरकहरतनुरूपम्, पुष्पसूक्ष्मञ्चेति–वटोदुम्बराणां पुष्पाणि, तानि तद्वर्णानि सूक्ष्माणि न लक्ष्यन्ते, 'पाणी'ति–प्राणिसूक्ष्मम्–अनुद्धरिः कुन्थुः, स हि चलन् विभाव्यते, न स्थितः, सूक्ष्मत्वात्, 'उत्तिङ्गं तथैव च'–उत्तिङ्गसूक्ष्मं–कीटिकानगरम्, तत्र कीटिकानगरेऽन्ये च सूक्ष्मसत्त्वा भवन्ति, पनकमिति पनकसूक्ष्मं, प्रायः प्रावृट्काले भूमिकाष्ठादिषु पञ्चवर्णस्तद्द्रव्यजीवः(लीनः) पनक इति । तथा बीजसूक्ष्मम्–शाल्यादिबीजस्य मुखमूले कणिका, या लोके तुषमुखमुच्यते, हरितं चेति–हरितसूक्ष्मं च, तच्चाऽत्य-

न्ताऽभिनवोद्भिन्नं पृथिवीसमानवर्णमेवेति। अण्डसूक्ष्मं चाष्टमम् इति, एतच्च मक्षिकाकीटिकागृहकोकिलब्राह्मणीकृकलासाद्यण्डमिति ॥ १५ ॥

अत्राह परः—षड्जीवनिकायिकाऽध्ययने विस्तरेण, महाऽऽचारकथायां संक्षेपेण च षड्जीवनिकायरक्षा साधूनामुक्ता, किम्पुनरत्रोच्यते ?—चारित्ररहस्यं षड्जीवनिकाय-रक्षैव, अतोऽत्राऽऽदरख्यापनार्थं द्वित्रिरुक्तेऽपि न दोषः।

एवमेआणि जाणित्ता सव्वभावेण संजए ।
अप्पमत्तो जए निच्चं सव्विंदिअसमाहिए ॥ १६ ॥

छा० एवमेतानि ज्ञात्वा, सर्वभावेन संयतः ।
अप्रमत्तो यतेत नित्यं, सर्वेन्द्रियसमाहितः ॥ १६ ॥

'एव०'—एवमेतानि ज्ञात्वा सर्वभावेन—शक्त्यनुरूपेण—स्वरूपसंरक्षणादिना संयतः—अप्रमत्तः—निद्रादिप्रमादरहितो यतेव नित्यं सर्वेन्द्रियसमाहितः ॥ १६ ॥

धुवं च पडिलेहिज्जा जोगसा पायकंबलं ।
सिज्जमुच्चारभूमिं च संथारं अदुवासणं ॥ १७ ॥

छा० ध्रुवं च प्रतिलेखयेत्, योगेन पात्रकम्बलम् ।
शय्यामुच्चारभूमिं च, संस्तारमथवाऽऽसनम् ॥ १७ ॥

'धुवं०'–ध्रुवञ्च–नित्यञ्च प्रत्युपेक्षेत सिद्धान्तोक्तविधिना योगे सति–सति सामर्थ्ये, पात्रकम्बलं–पात्रग्रहणाच्छेषोपधिं शय्यां–वसतिं द्विकालम्, वर्षासु त्रिकालम्, उच्चारभूमिं, चात् कालभूमिं च, संस्तारकं–तृणमयादिरूपम्, अथवाऽऽसनं–काष्ठासनं पादप्रोञ्छनं वा प्रत्युपेक्षेत ॥ १७ ॥

उच्चारं पासवणं खेलं सिंघाण जल्लिअं ।
फासुअं पडिलेहित्ता परिट्ठाविज्ज संजए ॥ १८ ॥

छा० उच्चारं प्रस्रवणं, श्लेष्म सिङ्घाणं जल्लकम् ।
प्रासुकं प्रतिलेख्य, परिष्ठापयेत् संयतः ॥ १८ ॥

'उच्चारं०'–उच्चारं प्रस्रवणं श्लेष्म सिंघाणं जल्लम्, एतानि प्रासुकं प्रत्युपेक्ष्य, स्थण्डिलमिति शेषः, परिष्ठापयेत् संयतः ॥ १८ ॥ गोचरप्रवेशमधिकृत्याऽऽह—

पविसित्तु परागारं पाणट्ठा भोअणस्स वा ।
जयं चिट्ठे मिअं भासे न य रूवेसु मणं करे ॥ १९ ॥

छा० प्रविश्य परागारं, पानार्थं भोजनाय वा ।
यतं तिष्ठेन्मितं भाषेत, न च रूपेषु मनः कुर्यात् ॥ १९ ॥



१ 'पात्रग्रहणादलाबुदारुमयादिग्रहणम्, कम्बलादानादूर्णासूत्रमयग्रहणम्' इति प्रत्यन्तरेऽयंविशिष्टः पाठः ।

'पविसित्तु०'—प्रविश्य पराऽगारं—परगृहं पानार्थं भोजनस्य वा यतं—गवाक्षादीन्यनवलोकयन्-तिष्ठेत्, मितं भाषेत, न रूपेषु—दातृ-कान्तादिषु मनः कुर्यात् ॥ १९ ॥

बहुं सुणेइ कण्णेहिं बहुं अच्छीहिं पिच्छइ ।
न य दिट्ठं सुअं सव्वं भिक्खू अक्खाउमरिहइ ॥ २० ॥

छा० बहु शृणोति कर्णैः, बह्वक्षीभिः प्रेक्षते ।
न च दृष्टं श्रुतं सर्वं, भिक्षुराख्यातुमर्हति ॥ २० ॥

'बहुं०'—बहु शोभनाऽशोभनं शृणोति शब्दजातमिति शेषः, अक्षिभ्यां पश्यति रूपजातमिति, न च दृष्टं श्रुतं सर्वं स्वपरोभयाऽहितमपि भिक्षुराख्यातुमर्हति, चारित्रोपघातित्वात् ॥ २० ॥

सुअं वा जइवा दिट्ठं न लविज्जोवघाइअं ।
न य केण उवाएण गिहिजोगं समायरे ॥ २१ ॥

छा० श्रुतं वा यदिवा दृष्टं, न लपेदौपघातिकम् ।
न च केनोपायेन, गृहियोगं समाचरेत् ॥ २१ ॥

'सुअं०'—श्रुतं वाऽन्यतो यदि वा दृष्टं स्वयमेव नाऽऽलपेत्, औपघातिकं यथा—चौरस्त्वमित्यादिरूपम्, न च केनोपायेन—उपरोधादिना गृहियोगं—बालक्रीडनगृहरक्षादिकं समाचरेत् ॥ २१ ॥

निट्ठाणं रसणिज्जूढं भद्दगं पावगं ति वा ।
पुट्ठो वा वि अपुट्ठो वा लाभालाभं न निद्दिसे ॥ २२ ॥
छा० निष्ठानं रसनिर्व्यूढं, भद्रकं पापकमिति वा ।
पृष्टो वाऽप्यपृष्टो वा, लाभालाभौ न निर्दिशेत् ॥ २२ ॥

'निट्ठाणं०'–निष्ठानं–सर्वगुणोपेतं, रसनिर्व्यूढम्–एतद्विपरीतं कदशनम्, एतदाश्रित्यायं भद्रकम्, द्वितीयं पापकमिति वा, पृष्टो वाऽपि परेण, अपृष्टो वा स्वयमेव लाभमलाभं न निर्दिशेत् ॥ २२ ॥

न य भोअणम्मि गिद्धो चरे उंछं अयंपिरो ।
अफासुअं न भुंजिज्जा कीयमुद्देसिआहडं ॥ २३ ॥
छा० न च भोजने गृद्धः, चरेदुञ्छमजल्पन् ।
अप्रासुकं न भुञ्जीत, क्रीतमौद्देशिकमाहृतम् ॥ २३ ॥

'न य ०'–न च भोजने गृद्धः सन्–ईश्वरादिषु कुलेषु चरेत्, अपि तु उञ्छं–भावतो ज्ञाताऽज्ञातमजल्पनशीलः–धर्मलाभमात्राऽभिधायी चरेत, तत्राऽपि अप्रासुकं–सचित्तमिश्रादि कथञ्चिद् गृहीतमपि न भुञ्जीत । क्रीतमौद्देशिकाऽऽहृतं प्रासुकमपि ॥ २३ ॥

संनिहिं च न कुव्विज्जा अणुमायं पि संजए ।
मुहाजीवी असंबद्धे हविज्ज जगणिस्सिए ॥ २४ ॥

छा० सान्निधिं च न कुर्यात्, अणुमात्रमपि संयतः ।
मुधाजीव्यसम्बद्धः, भवेज्जगन्निश्रितः ॥ २४ ॥

'संनिहिं०'—सन्निधिं च प्राङ्‌निरूपितस्वरूपं न कुर्यादणुमात्रमपि संयतः, मुधाजीवी तु पूर्ववत्, असम्बद्धः—पद्मिनीपत्रवद्‌गृहस्थैः, एवम्भूतः सन् जगन्निःश्रितः—चराचरसंरक्षणप्रतिबद्धो भवेत् ॥ २४ ॥

लूहवित्ती सुसंतुट्ठे अप्पिच्छे सुहरे सिआ ।
आसुरत्तं न गच्छिज्जा सुच्चाणं जिणसासणं ॥ २५ ॥

छा० रूक्षवृत्तिः सुसंतुष्टः, अल्पेच्छः सुभरः स्यात् ।
आसुरत्वं न गच्छेत्, श्रुत्वा जिनशासनम् ॥ २५ ॥

'लूहवित्ती०'—रूक्षैः—वल्लचणकादिभिर्वृत्तिरस्येति रूक्षवृत्तिः, सुसन्तुष्टो येन तेन वा, अल्पेच्छुरल्पाऽऽहारः, सुभरः स्यात्, अल्पेच्छुत्वात्, तथा आसुरत्वं न गच्छेत्—क्रोधभावं न गच्छेत् क्वचित्, 'सुच्चा'—श्रुत्वा जिनशासनं क्रोधविपाकप्रतिपादकं वीतरागवचनम् ॥ २५ ॥

१ 'क्रोधविपाकस्यापकमर्हद्वचनं श्रुत्वा' इति पाठान्तरम् ।

कण्णसुक्खेहिं सद्देहिं पेमं नाभिनिवेसए ।
दारुणं कक्कसं फासं काएण अहिआसए ॥ २६ ॥

छा० कर्णसुखेषु शब्देषु, प्रेम नाभिनिवेशयेत् ।
दारुणं कर्कशं स्पर्शं, कायेनाध्यासीत ॥ २६ ॥

'कण्णसुक्खेहिं०'–कर्णसौख्यहेतवः–कर्णसौख्याः शब्दाः–वेणुवीणादिसम्बन्धिनः, तेषु प्रेमरागं नाऽभिनिवेशयेत्, तथा दारुणम्–अनिष्टं कर्कशं–कठिनं स्पर्शमुपनतं सन्तं कायेनाऽतिसहेत, न तत्र द्वेषं कुर्यात् ॥ २६ ॥

खुहं पिवासं दुस्सिज्जं सीउण्हं अरइं भयं ।
अहिआसे अव्वहिओ देहे दुक्खं महाफलं ॥ २७ ॥

छा० क्षुधां पिपासां दुश्शय्यां, शीतोष्णमरतिं भयम् ।
अध्यासीताऽव्यथितः, देहे दुःखं महाफलम् ॥ २७ ॥

'खुहं०'–क्षुधां पिपासां दुश्शय्यां शीतोष्णमरतिं भयमतिसहेत, एतत्सर्वमव्यथितः–अदीनमनाः स्मरन् (सन्)–' देहे दुःखं महाफलं ', सञ्चिन्त्येति वाक्यशेषः ॥ २७ ॥

अत्थंगयम्मि आइच्चे प(पु)रत्था य अणुग्गए ।
आहारमइअं सव्वं मणसा वि न पत्थए ॥ २८ ॥

छा० अस्तङ्गत आदित्ये, प(पु)रस्ताच्चाऽनुद्गते ।
आहारमादिकं सर्वं, मनसाऽपि न प्रार्थयेत् ॥ २८ ॥

'अत्थं०'–अस्तङ्गत आदित्ये पुरस्ताचाऽनुद्गते प्रभातेऽनुद्गत इत्यर्थः, आहारात्मकं सर्वं मनसाऽपि न प्रार्थयेत् ॥ २८ ॥ दिवाऽप्यलभ्यमाने आहारे किं कुर्यादित्याह—

अतिंतिणे अचवले अप्पभासी मिआसणे ।
हविज्ज उअरे दंते थोवं लद्धुं न खिंसए ॥ २९ ॥

छा० अतिन्तिणोऽचपलः, अल्पभाषी मिताऽशनः ।
भवेदुदरे दान्तः, स्तोकं लब्ध्वा न खिंसयेत् ॥ २९ ॥

'अतिंतिणे०'–अतिंतिणो नाम अलाभेऽपि नेषत्–यत्किञ्चिद् भाषी, अचपलः–सर्वत्र स्थिरः, अल्पभाषी–कारणेऽपि मितभाषी, मिताऽशनः–अल्पभोजी, इत्येवम्भूतो भवेत्, तथा–उदरे दान्तः–येन तेन वा तृप्तः, स्तोकं लब्ध्वा न खिंसयेत्–देयं दातारं वा न हीलयेत् ॥ २९ ॥ मदवर्जनाऽर्थमाह–

न बाहिरं परिभवे अत्ताणं न समुक्कसे ।
सुअलाभे न मज्जिज्जा जच्चा तवस्सिबुद्धिए ॥ ३० ॥

छा० न बाह्यं परिभवेत्, आत्मानं न समुत्कर्षयेत् ।
श्रुतलाभेन न माद्येत, जात्या तपस्वि-बुद्धया ॥ ३० ॥

'न बाहिरं०'-न बाह्यमात्मनोऽन्यं परिभवेत्, आत्मानं न समुत्कर्षयेत्, इत्थम्भूतोऽहमिति, श्रुतलाभाभ्यां न माद्येत, श्रुतवानहम्, लाभवानहम्, जात्या तापस्त्येन (तपस्वितया) बुद्धया न माद्येत इति वर्तते, उपलक्षणं चैतत्कुलबलरूपाणाम्, ततश्चाष्टविधेनाऽपि मदेन न माद्येत ॥ ३० ॥ ओघत आमोगाऽनाभोगसेवितार्थमाह—

से जाणमजाणं वा कट्टु आहम्मिअं पयं ।
संवरे खिप्पमप्पाणं बीअं तं न समाअरे ॥ ३१ ॥

छा० स जानन्नजानन्वा, कृत्वाऽधार्मिकं पदम् ।
संवृणुयात्क्षिप्रमात्मानं, द्वितीयं तं न समाचरेत् ॥ ३१ ॥

'से जाण०'-स साधुर्जानन्-अजानन् वा कृत्वाऽधार्मिकं पदं कथञ्चिद्रागदोषाभ्यां मूलोत्तरगुणविराधनामितिभावः, संवरेत् क्षिप्रमात्मानमालोचनादिना, द्वितीयं पुनस्तन्न समाचरेत् ॥ ३१ ॥ एतदेवाह—



अणायारं परक्कम्म नेव गूहे न निण्हवे ।
सुई सया विअडभावे असंसत्ते जिइंदिए ॥ ३२ ॥

छा० अनाचारं पराक्रम्य, नैव गूहयेन्न निह्नुवीत ।
शुचिः सदा विकटभावः, असंसक्तो जितेन्द्रियः ॥ ३२ ॥

'अणायारं०'—अनाचारं—सावद्ययोगं पराक्रम्य—आसेव्य गुरोः सकाश आलोचयन् न निगूहेत किञ्चित् किञ्चित् कथनात्, न निह्नुवीत सर्वथाऽपलापात्, किंविशिष्टः सन्? शुचिरकलुषमतिः सदा विकटभावः—प्रकटभावः, असंसक्तः-गृहस्थसंसक्तिरहितः, जितेन्द्रियः ॥ ३२ ॥

अमोहं वयणं कुज्जा आयरिअस्स महप्पणो ।
तं परिगिज्झ वायाए कम्मुणा उववाअए ॥ ३३ ॥

छा० अमोघं वचनं कुर्यात्, आचार्यस्य महात्मनः ।
तत्परिगृह्य वाचा, कर्मणोपपादयेत् ॥ ३३ ॥

'अमोहं०'—अमोघम्—अवन्ध्यं वचनं कुर्याद् आचार्याणा महात्मनाम्, तद्वचनं परिगृह्य वाचा कर्मणा—क्रिययोपपादयेत्—सम्पादयेत् ॥ ३३ ॥



अधुवं जीविअं नच्चा सिद्धिमग्गं विआणिआ ।
विणिअट्टिज्ज भोएसु आउं परिमिअमप्पणो ॥ ३४ ॥

छा० अध्रुवं जीवितं ज्ञात्वा, सिद्धिमार्गं विज्ञाय ।
विनिवर्तयेद्भोगेभ्यः, आयुः परिमितमात्मनः ॥ ३४ ॥

'अधुवं०'– अध्रुवमनित्यं जीवनं ज्ञात्वा सिद्धिमार्गं–ज्ञानादिरूपं विज्ञाय विनिवर्तेत भोगेभ्यः[1], आयुः परिमितं-वर्षशतमितमात्मनो विज्ञाय निवर्तेत भोगेभ्यः ॥ ३४ ॥ उपदेशाऽधिकारे प्रक्रान्तमेव समर्थयन्नाह–

बलं थामं च पेहाए सद्धामारोग्गमप्पणो ।
खित्तं कालं च विण्णाय तहप्पाणं निजुंजए ॥ ३५ ॥

छा० बलं स्थाम च प्रेक्ष्य, श्रद्धामारोग्यमात्मनः ।
क्षेत्रं कालं च विज्ञाय, तथाऽऽत्मानं नियुञ्जीत ॥ ३५ ॥

'बलं०'– ॥ ३५ ॥

जरा जाव न पीलेइ वाही जाव न वड्ढइ ।
जाविंदिआ न हायंति ताव धम्मं समाअरे ॥ ३६ ॥

छा० जरा यावन्न पीडयति, व्याधिर्यावन्न वर्धते ।
यावदिन्द्रियाणि न हीयन्ते, तावद्धर्मं समाचरेत् ॥ ३६ ॥



---

१ 'भोगेभ्यः कर्मबन्धहेतुभ्यः' इत्यन्यत्र ।
२ 'इयं गाथा लघुवृहद्वृत्तौ नोक्ता' अवचूर्यन्तरस्पष्टीकरणम् ।

'जरा जाव०'—जरा यावन्न पीडयति व्याधिर्यावन्न वर्द्धते, यावदिन्द्रियाणि न हीयन्ते, तावदत्राऽन्तरे धर्मं समाचरेत् ॥ ३६ ॥ धर्मोपायमाह—

कोहं माणं च मायं च लोभं च पाववड्ढणं ।
वमे चत्तारि दोसे उ, इच्छंतो हिअमप्पणो ॥ ३७ ॥
छा० क्रोधं मानं च मायां च, लोभं च पापवर्द्धनम् ।
वमेच्चतुरो दोषाँस्तु, इच्छन् हितमात्मनः ॥ ३७ ॥

'कोहं०'—क्रोधं मानं च मायां च लोभं च पापवर्धनम्, नियमयेच्चतुरो दोषान्—एतानेव क्रोधादीन् हितमिच्छन्नात्मनः ॥ ३७ ॥ अवमाने त्विहलोक एवाऽपायमाह—

कोहो पीइं पणासेइ माणो विणयणासणो ।
माया मित्ताणि णासेइ लोभो सव्वविणासणो ॥ ३८ ॥
छा० क्रोधः प्रीतिं प्रणाशयति, मानो विनयनाशनः ।
माया मित्राणि नाशयति, लोभः सर्वविनाशनः ॥ ३८ ॥

'कोहो०'— क्रोधः प्रीतिं प्रणाशयति मानो विनयनाशनः, माया मित्राणि नाशयति लोभः सर्वविनाशनः ॥ ३८ ॥ अतः—

उवसमेण हणे कोहं माणं मद्दवया जिणे ।
मायं चज्जवभावेण लोभं संतोसओ जिणे ॥ ३९ ॥

छा० उपशमेन हन्यात्क्रोधं, मानं मार्दवेन जयेत् ।
मायां चाऽऽर्जवभावेन, लोभं सन्तोषतो जयेत् ॥ ३९ ॥

'उवसमेण०'- उपशमेन क्षान्तिरूपेण हन्यात् क्रोधम्, मानं मार्दवेन-अनुच्छ्रिततया जयेत्, मायां च ऋजुभावेन लोभं सन्तोषतो जयेत् ॥ ३९ ॥ परलोकाऽपायमाह-

कोहो अ माणो अ अणिग्गहिआ ।
माया य लोभो अ पवड्ढमाणा ॥
चत्तारि एए कसिणा कसाया ।
सिंचंति मूलाइं पुणब्भवस्स ॥ ४० ॥

छा० क्रोधश्च मानश्चाऽनिर्गृहीतौ ।
माया च लोभश्च प्रवर्धमानौ ॥
चत्वार एते कृष्णाः ( कृत्स्नाः ) कषायाः ।
सिञ्चन्ति मूलानि पुनर्भवस्य ॥ ४० ॥

'कोहो अ०'–क्रोधश्च मानश्च अनिगृहीतौ माया च लोभश्च प्रवर्द्धमानौ, चत्वार एते कृत्स्नाः–सम्पूर्णाः कषायाः सिञ्चन्ति–अशुभभावजलेन मूलानि पुनर्भवस्य–पुनर्जन्मतरोः ॥ ४० ॥ कषायनिग्रहार्थमिदं कुर्यादित्याह–

रायणिएसु विणयं पउंजे ।
धुवसीलयं सययं न हावइज्जा ॥
कुम्मुव्व अल्लीणपलीणगुत्तो ।
परक्कमिज्जा तवसंजमम्मि ॥ ४१ ॥

छा० रात्निकेषु विनयं प्रयुञ्जीत ।
ध्रुवशीलतां सततं न हापयेत् ॥
कूर्म इवाऽऽलीनप्रलीनगुप्तः ।
पराक्रामेत्तपःसंयमयोः ॥ ४१ ॥

'रायणिएसु०'–रत्नाऽधिकेषु–चिरदीक्षितेषु विनयमभ्युत्थानादिकं प्रयुञ्जीत, तथा ध्रुवशीलताम्–अष्टादशशीलाङ्गसहस्रपालनरूपां सततं न हापयेत्, कूर्म इव–कच्छप इवाऽऽलीनप्रलीनगुप्तः–अङ्गोपाङ्गानि सम्यक् संयम्येत्यर्थः, पराक्रामेत्–प्रवर्तेत तपःसंयमे–तपःप्रधानसंयमे ॥ ४१ ॥

निद्दं च न बहुमण्णिज्जा सप्पहासं विवज्जए ।
मिहोकहाहिं न रमे सज्झायम्मि रओ सया ॥ ४२ ॥

छा० निद्रां च न बहुमन्येत, सप्रहासं विवर्जयेत् ।
मिथःकथासु न रमेत, स्वाध्याये रतः सदा ॥ ४२ ॥

'निद्दं०'– निद्रां च न बहुमन्येत, सप्रहासं वा–अतीवप्रहासरूपं विवर्जयेत्, मिथःकथासु–राहस्यकीषु न रमेत, स्वाध्याये रतः सदा भवेदिति ॥ ४२ ॥

जोगं च समणधम्मंमि जुंजे अणलसो धुवं ।
जुत्तो अ समणधम्मंमि अट्ठं लहइ अणुत्तरं ॥ ४३ ॥

छा० योगं च श्रमणधर्मे, युञ्जीताऽनलसो ध्रुवम् ।
युक्तश्च श्रमणधर्मे, अर्थं लभतेऽनुत्तरम् ॥ ४३ ॥

'जोगं०'– योगं च मनोवाक्कायरूपं, श्रमणधर्मे–क्षान्त्यादिरूपे युञ्जीत, अनलसः, ध्रुवं–निश्चितम्, सामान्येन सर्वत्राऽविशेषतोऽनुप्रेक्षाकाले मनोयोगम्, अध्ययनकाले वाग्योगम्, प्रत्युपेक्षणाकाले काययोगम्, फलमाह –एवं युक्तः–व्यापृतः श्रमणधर्मेऽर्थं लभतेऽनुत्तरम् ॥ ४३ ॥ एतदेवाह–

इहलोगपारत्तहिअं जेणं गच्छइ सुग्गइं ।
बहुस्सुअं पज्जुवासिज्जा पुच्छिज्जत्थविणिच्छयं ॥ ४४ ॥

छा० इहलोकपरत्रहितं, येन गच्छति सुगतिम् ।
बहुश्रुतं पर्युपासीत, पृच्छेदर्थविनिश्चयम् ॥ ४४ ॥

'इह०'– इहलोकपरत्रहितं येनाऽर्थेन ज्ञानादिना करणभूतेन गच्छाति सुगतिम् । उक्तस्वरूपसाधनोपायमाह–बहुश्रुतमागमवृद्धं पर्युपासीत–सेवेत, सेवमानश्च पृच्छेदर्थविनिश्चयम् ॥ ४४ ॥

हत्थं पायं च कायं च पणिहाय जिइंदिए ।
अल्लीणगुत्तो निसीए सगासे गुरुणो मुणी ॥ ४५ ॥

छा० हस्तौ पादौ च कायं च, प्रणिधाय जितेन्द्रियः ।
आलीनगुप्तो निषीदेत्, सकाशे गुरोर्मुनिः ॥ ४५ ॥

'हत्थं०'–हस्तं पादं च कायं च प्रणिधाय–सङ्कोच्य जितेन्द्रिय आसामत्त्येन लीनः–उपयुक्तः, गुप्तो गुप्तिभिर्निषीदेत् सकाशे गुरोर्मुनिः ॥ ४५ ॥



न पक्खओ न पुरओ नेव किच्चाण पिट्ठओ ।
न य ऊरुं समासिज्जा(त्ता) चिट्ठिज्जा गुरुणंतिए ॥ ४६ ॥

छा० न पक्षतो न पुरतः, नैव कृत्यानां पृष्ठतः ।
न च ऊरू समाश्रित्य, तिष्ठेद्गुर्वन्तिके ॥ ४६ ॥

'न पक्खओ०'—न पक्षतः—पार्श्वतः, न पुरतोऽग्रतः, नैव कृत्यानामाचार्याणां पृष्ठतो निषीदेदिति वर्तते, अविनयवन्दमानाऽन्तरायाऽदर्शनादिदोषात्, न चोरुं समाश्रित्य—ऊरोरुपरि ऊरुं कृत्वा तिष्ठेद् गुर्वन्तिक ॥ ४६ ॥ उक्तः कायप्रणिधिः, वाक्प्रणिधिमाह—

अपुच्छिओ न भासिज्जा भासमाणस्स अंतरा ।
पिट्ठिमंसं न खाइज्जा मायामोसं विवज्जए ॥ ४७ ॥

छा० अपृष्टो न भाषेत, भाषमाणस्याऽन्तरा ।
पृष्ठमांसं न खादेत्, मायामृषां विवर्जयेत् ॥ ४७ ॥

'अपुच्छिओ०'—अपृष्टो न भाषेत भाषमाणस्य चाऽन्तरे, तथा पृष्ठमांसं—परोक्षदोषकीर्तनरूपं न खादेत्—न भाषेत मायां मृषां विवर्जयेत् ॥ ४७ ॥



अप्पत्तिअं जेण सिआ आसु कुप्पिज्ज वा परो ।
सव्वसो तं न भासिज्जा भासं अहिअगामिणिं ॥ ४८ ॥

छा० अप्रीतिर्येन स्यात्, आशु कुप्येद्वा परः ।
सर्वशस्तां न भाषेत, भाषामहितगामिनीम् ॥ ४८ ॥

'अप्पत्तिअं०'–'अप्रीतिर्येनेति [प्राकृतत्वाद्] यया भाषितया स्यात्, आशु कुप्येद्वा नरः, सर्वशस्तां भाषां न भाषेत, अहितगामिनीम्–अहिते नरकादौ गमयतीत्येवंशीलाम् ॥ ४८ ॥ यथा भाषेत तथाऽऽह—

दिट्ठं मिअं असंदिद्धं पडिपुण्णं विअं जिअं ।
अयंपिरमणुव्विग्गं भासं णिसिर अत्तवं ॥ ४९ ॥

छा० दृष्टां मितामसन्दिग्धां, प्रतिपूर्णां व्यक्तां जिताम् ।
अजल्पाकीमनुद्विग्नां, भाषां निसृजेदात्मवान् ॥ ४९ ॥

'दिट्ठं०'–दृष्टार्थविषयां दृष्टां मितां–स्तोकामसन्दिग्धां–स्फुटां प्रतिपूर्णां–स्वरादिभिर्व्यक्ताम्–अलल्लां जितां–परिचिताम् अजल्पनशीलां–नोच्चैर्नातिनीचैरनुद्विग्नां–नोद्वेगकारिणीम्, एवम्भूतां भाषां निसृजेत्–वदेत्, आत्मवान्–सचेतनः ॥ ४९ ॥ पुनश्च—

आयारपण्णत्तिधरं दिट्ठिवायमहिज्जगं ।
वायविक्खलिअं नच्चा न तं उवहसे मुणी ॥ ५० ॥



छा० आचारप्रज्ञप्तिधरं, दृष्टिवादमध्येतारम् ।
वाग्विस्खलितं ज्ञात्वा, न तमुपहसेन्मुनिः ॥ ५० ॥

'आयार०'—आचारप्रज्ञप्तिधरं—आचारधरः स्त्रीलिङ्गादीनि जानाति प्रज्ञप्तिधरस्तु तान्येव सविशेषणानीत्येवम्भूतं, दृष्टिवादमधीयानं—प्रकृतिप्रत्ययलोपाऽऽगमवर्णविकारकालकारकादिवेदिनं वागविस्खलितं ज्ञात्वा न तम्—आचारादिधरमुपहसेन्मुनिः ॥ ५० ॥

नक्खत्तं सुमिणं जोगं निमित्तं मंतभेसजं ।
गिहिणो तं न आइक्खे भूआहिगरणं पयं ॥ ५१ ॥

छा० नक्षत्रं स्वप्नं योगं, निमित्तं मन्त्रभैषजम् ।
गृहिणस्तन्नाऽऽचक्षीत, भूताधिकरणं पदम् ॥ ५१ ॥

'नक्खत्तं०'—नक्षत्रमश्विन्यादि यात्रायर्थं, स्वप्नं शुभाऽशुभफलम्, अनुभूतादि, योगं वशीकरणादिं, निमित्तमतीतादि, मन्त्रं वृश्चिकमन्त्रादि, भैषजमतीसाराद्यौषधम्, गृहिणः पृच्छतस्तन्नक्षत्रादि नाऽचक्षीत, किंविशिष्टम् ? भूताऽधिकरणं पदम्—भूतान्येकेन्द्रियादीनि संघट्टनादिना अधिक्रियन्ते—व्यापाद्यन्तेऽस्मिन्निति भूताऽधिकरणम्, ततश्च तेषां प्रश्ने एवं ब्रूयात्—'अनधिकारोऽत्र साधूनाम्' ॥ ५१ ॥

अण्णट्ठं पगडं लयणं भइज्ज सयणासणं ।
उच्चारभूमिसंपण्णं इत्थीपसुविवज्जिअं ॥ ५२ ॥

छा० अन्यार्थं प्रकृतं लयनं, भजेत शयनाऽऽसनम् ।
उच्चारभूमिसम्पन्नं, स्त्रीपशुविवर्जितम् ॥ ५२ ॥

'अण्णट्ठं०'—अन्यदर्थं न साध्वर्थं प्रकृतं—निर्वर्तितं लयनं—स्थानं—वसतिरूपं भजेत—सेवेत, तथा शयनाऽऽसनमिति—अन्यार्थं प्रकृतं संस्तारकपीठकादि सेवेतेत्यर्थः, उच्चार-भूमिसम्पन्नम्—उच्चार-प्रस्रवणादिभूमियुक्तं स्त्री-पशुविवर्जितम् ॥ ५२ ॥ ईदृशं लयनं सेवमानस्य धर्मकथाविधिमाह—

विवित्ता य भवे सिज्जा नारीणं न लवे कहं ।
गिहिसंथवं न कुज्जा कुज्जा साहूहिं संथवं ॥ ५३ ॥

छा० विविक्ता च भवेच्छय्या, नारीणां न लपेत्कथाम् ।
गृहिसंस्तवं न कुर्यात्, कुर्यात्साधुभिः संस्तवम् ॥ ५३ ॥

'विवित्ता०'—विविक्ता च तदन्यसाधुभी रहिता 'च'—शब्दात्तथाविधभुजङ्गप्रायैकपुरुषयुक्ता च भवेच्छय्या—वसतिः, यदि ततो नारीणां न लपेत्कथाम्, शङ्कादिदोषप्रसङ्गात्, पुंसान्तु कथयेत्, अविविक्तायां नारीणामपीति, गृहिसंस्तवं—गृहिपरिचयं न कुर्यात्, कुर्यात्साधुभिः संस्तवम् ॥ ५३ ॥ विशेषतः स्त्रीसंस्तवो न कर्तव्य एव, अत्र कारणमाह—

जहा कुक्कुडपोअस्स निच्चं कुललओ भयं ।
एवं खु बंभयारिस्स इत्थीविग्गहओ भयं ॥ ५४ ॥

छा० यथा कुक्कुटपोतस्य, सदा कुललतो भयम् ।
एवं खलु ब्रह्मचारिणः, स्त्रीविग्रहतो भयम् ॥ ५४ ॥

'जहा०'—यथा कुक्कुटपोतस्य नित्यं कुललतो भयं—मार्जाराद्भयम्, एवमेव ब्रह्मचारिणः साधोः स्त्रीविग्रहात्—स्त्रीशरीराद् भयम्, विग्रहग्रहणं मृतविग्रहादपि भयख्यापनार्थम् ॥ ५४ ॥ अतः—

चित्तभित्तिं न निज्झाए नारिं वा सुअलंकिअं ।
भक्खरं पिव दट्ठूणं दिट्ठिं पडिसमाहरे ॥ ५५ ॥

छा० चित्रभित्तिं न निर्ध्यायेत्, नारीं वा स्वलङ्कृताम् ।
भास्करमिव दृष्ट्वा, दृष्टिं प्रतिसमाहरेत् ॥ ५५ ॥

'चित्त०'—चित्रगतां स्त्रियं न निरीक्षेत, नारीं वा सचेतनामेव स्वलङ्कृताम्, उपलक्षणमेतत्, अनलङ्कृतां वा न निरीक्षेत, कथञ्चिद्दर्शनयोगेऽपि भास्करमिव—आदित्यमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेत्—द्रागेव निवर्तयेत् ॥ ५५ ॥ किंबहुना—

हत्थपायपडिच्छिण्णं कण्णणासविगप्पिअं ।
अवि वाससयं नारिं बंभयारी विवज्जए ॥ ५६ ॥

छा० हस्तपादप्रतिच्छिन्नां, कर्णनासाविकल्पिताम् ।
अपि वर्षशतां नारीं, ब्रह्मचारी विवर्जयेत् ॥ ५६ ॥

'हत्थ०'—हस्तपादप्रतिच्छिन्नामिति प्रतिच्छिन्नहस्तपादां कर्णनासाविकृत्तां—विकृत्तकर्णनासाम्, अपि वर्षशतिकां विकृतां नारीं ब्रह्मचारी विवर्जयेत् ॥ ५६ ॥ अपि च—

विभूसा इत्थिसंसग्गो पणीअं रसभोअणं ।
नरस्सत्तगवेसिस्स विसं तालउडं जहा ॥ ५७ ॥

छा० विभूषा स्त्रीसंसर्गः, प्रणीतं रसभोजनम् ।
नरस्याऽऽत्मगवेषिणः, विषं तालपुटं यथा ॥ ५७ ॥

'विभूसा०'—विभूषा—नखकेशादिसत्काररूपा, स्त्रीसंसर्गः, प्रणीतरसभोजनं—गलत्स्नेहम्, एतत्सर्वमेव विभूषादि नरस्याऽऽत्मगवेषिणः—आत्महिताऽन्वेषणपरस्य विषं तालपुटं यथा ॥ ५७ ॥

अंगपच्चंगसंठाणं चारुल्लविअपेहिअं ।
इत्थीणं तं न निज्झाए कामरागविवड्ढणं ॥ ५८ ॥

छा० अङ्गप्रत्यङ्गसंस्थानं, चारूल्लपितप्रेक्षितम् ।
स्त्रीणां तं न निध्यायेत्, कामरागविवर्द्धनम् ॥ ५८ ॥

'अंगपच्चंग०'—अङ्गप्रत्यङ्गसंस्थानम्—अङ्गानि—शिरःप्रभृतीनि प्रत्यङ्गानि—नयनादीनि, एतेषां संस्थानं—विन्यासविशेषं चारु लपितप्रेक्षितं स्त्रीणामङ्गादीनि न निरीक्षेत कामरागविवर्द्धनमिति ॥ ५८ ॥

विसएसु मणुण्णेसु पेमं नाभिनिवेसए ।
अणिच्चं तेसिं विण्णाय परिणामं पोग्गलाण उ ॥ ५९ ॥

छा० विषयेषु मनोज्ञेषु, प्रेम नाभिनिवेशयेत् ।
अनित्यं तेषां विज्ञाय, परिणामं पुद्गलानां तु ॥ ५९ ॥

'विसएसु०'—विषयेषु मनोज्ञेषु प्रेमरागं नाभिनिवेशयेत्—न कुर्यात्, अमनोज्ञेषु द्वेषं न कुर्यात्, आह—उक्तमेवेदं प्राक् 'कण्णसुक्खेहिं सद्देहिं' इत्यादि, किमर्थः पुनरुपन्यासः ? इत्युच्यते—कारणविशेषाऽभिधानेन विशेषोपलम्भार्थमिति, आह च—अनित्यमेव परिणामाऽनित्यतया तेषां पुद्गलानान्तु शब्दादिविषय—सम्बन्धिनामिति योगः, विज्ञाय जिनवचनानुसारेण, किमित्याह—परिणामं—पर्यायान्तराऽऽपत्तिलक्षणम् ॥५९॥ इदमेव स्पष्टयन्नाह—

पुग्गलाण परीणामं तेसिं नच्चा जहा तहा ।
विणीयतिण्हो विहरे सीईभूएण अप्पणा ॥ ६० ॥

छा० पुद्गलानां परिणामं, तेषां ज्ञात्वा यथा तथा ।
विनीततृष्णो विहरेत्, शीतीभूतेनाऽऽत्मना ॥ ६० ॥

'पुग्गलाण०'—पुद्गलानां—शब्दादिविषयान्तर्गतानां परिणामं तेषां ज्ञात्वा, यथा मनोज्ञेतररूपतया भवन्ति तथा ज्ञात्वा, विनीततृष्णोऽपेताऽभिलाषो विहरेत्, शीतिभूतेन—क्रोधाद्यग्न्यभावात्प्रशान्तेनाऽऽत्मना ॥ ६० ॥ किञ्च—

जाइ सद्धाइ निक्खंतो परिआयट्ठाणमुत्तमं ।
तमेव अणुपालिज्जा गुणे आयरियसम्मए ॥ ६१ ॥

छा० यया श्रद्धया निष्क्रान्तः, पर्यायस्थानमुत्तमम् ।
तामेवाऽनुपालयेत्, गुणानाऽऽचार्यसम्मतान् ॥ ६१ ॥

'जाइ०'—यया श्रद्धया प्रधानगुणस्वीकरणरूपया निष्क्रान्तो गृहवासात्—पर्यायस्थानमुत्तमं प्राप्तः, तामेव श्रद्धामनुपालयेत्—प्रवर्द्धमानां कुर्यात्, केत्याह गुणे—लोकोत्तररूपे—आचार्यसम्मते ॥ ६१ ॥ फलमाह—

तवं चिमं संजमजोगयं च ।
सज्झायजोगं च सया अहिट्ठए ॥
सूरव्व सेणाइ समत्तमाउहे ।
अलमप्पणो होइ अलं परेसिं ॥ ६२ ॥

छा० तपश्चेदं संयमयोगं च ।
स्वाध्याययोगं च सदाऽधितिष्ठेत् ॥
शूर इव सेनया समस्ताऽऽ(समात्ताऽऽ)युधः ।
अलमात्मने भवत्यलं परेभ्यः ॥ ६२ ॥



'तवं०'—तपश्चेदमनशनादिरूपं संयमयोगं च—संयमव्यापारम्, स्वाध्याययोगं च—वाचनादि सदाऽधिष्ठाता—तपःप्रभृतीनां कर्ता इत्यर्थः, स एवम्भूतः शूर इव सेनया चतुरङ्गरूपया—इन्द्रियकषायादिरूपया सेनया निरुद्धः

सन् समाप्तायुधः-सम्पूर्णतपःप्रभृतिखड्गाद्यायुधः, अलमात्मनो भवति संरक्षणाय, अलं परेषां च ॥ ६२ ॥ एतदेव स्पष्टयन्नाह—

सज्झाय-सज्झाणरयस्स ताइणो ।
अपावभावस्स तवे रयस्स ॥
विसुज्झइ जंसि मलं पुरेकडं ।
समीरिअं रुप्पमलं व जोइणा ॥ ६३ ॥

छा० स्वाध्याय-सद्ध्यानरतस्य त्रायिणः ।
अपापभावस्य तपसि रतस्य ॥
विशुद्ध्यते यस्मिन्(यदस्य) मलं पुराकृतम् ।
समीरितं रूप्यमलमिव ज्योतिषा ॥ ६३ ॥

'सज्झाय०'-स्वाध्याय सद्ध्यानरतस्य त्रातुरपापभावस्य-लब्ध्याद्यपेक्षारहितया शुद्धचित्तस्य तपसि रतस्य विशुद्ध्यते-अपैति यदस्य साधोर्मलं-कर्ममलं पुराकृतम्-जन्मान्तरोपात्तम्, दृष्टान्तमाह-समीरितं-प्रेरितं रूप्यमलमिव ज्योतिषाऽग्निना ॥ ६३ ॥ ततश्च—

से तारिसे दुक्खसहे जिइंदिए ।
सुएण जुत्ते अममे अकिंचणे ॥

विरायइ कम्मघणंमि अवगए ।
कसिणब्भपुडावगमे व चंदिमे ॥ ६४ ॥ त्ति बेमि ।

छा० स तादृशो दुःखसहो जितेन्द्रियः ।
श्रुतेन युक्तोऽममोऽकिञ्चनः ॥
विराजते कर्मघनेऽपगते ।
कृष्णाभ्रपुटाऽपगम इव चन्द्रमसि ॥ ६४ ॥ इति ब्रवीमि ।

'से तारिसे०'–स तादृशः पूर्वोदितगुणयुक्तः साधुर्दुःखसहः–परीषहजेता जितेन्द्रियः, श्रुतेन युक्तः, अममः, अकिञ्चनः, विराजते कर्मघने–ज्ञानाऽवरणीयादिमेवेऽपगते सति कृत्स्नाऽभ्रपुटापगमे इव चन्द्रमा इति यथा कृत्स्ने कृष्णे वाऽभ्रपुटे अपगते चन्द्रो विराजते शरदि तद्वदसौ अपेतकर्मघनः–समासादित-केवलाऽऽलोको विराजते । इति ब्रवीमीति पूर्ववत् ॥ ६४ ॥ इति आचारप्रणिध्यध्ययनस्याऽष्टमस्याऽवचूरिः ।

॥ आयारप्पणिहि-अज्झयणं अट्ठमं ॥

॥ इति आचारप्रणिध्यध्ययनमष्टमम् ॥





# ॥ अथ नवमाध्ययनम् ॥





इहानन्तराध्ययने निरवद्यं वच आचारप्रणिहितस्य भवतीति तत्र यत्नवता भवितव्यमित्येतदुक्तम्, इह-त्वाचारप्रणिहितो यथोचितविनयसम्पन्न एव भवतीत्येतदुच्यते, उक्तञ्च–

"आयारपणिहाणंमि, से सम्मं वट्टइ बुहे ।
णाणादीण विणीए जे, मोक्खट्ठा निव्विगिच्छए ॥ १ ॥

इत्यनेन सम्बन्धेनायातमिदमध्ययनम् । तथा च सूत्रम्

थंभा व कोहा व मयप्पमाया ।
गुरुस्सगासे विणयं न सिक्खे ॥
सो चेव उ तस्स अभूइभावो ।
फलं व कीयस्स वहाय होइ ॥ १ ॥

छा० स्तम्भाद्वा क्रोधाद्वा मायाप्रमादात् ।
गुरोः सकाशे विनयं न शिक्षेत ॥
स चैव तु तस्याऽभूतिभावः ।
फलमिव कीचकस्य वधाय भवति ॥ १ ॥

'थंभा०'—ज्ञात्यादिभिरुत्तमोऽहमिति स्तम्भाद्वा, अहं गुरुभिराकुष्ट इति क्रोधाद्वा, मायाप्रमादात्—शक्तोऽपि न शक्नोमीति मायातः, प्रमादात्—निद्रादेः, गुरोः सकाशे विनयं—ग्रहणाऽऽसेवनरूपं न शिक्षेत, स एव तु स्तम्भादिर्विनयशिक्षाविघ्नहेतुस्तस्य जडमतेरभूतिभावः—असम्पद्भावः, वधाय भवति—गुणलक्षणभावप्राणविनाशाय भवति, दृष्टान्तमाह—फलमिव कीचकस्य वधाय भवति, वंशो हि फले संजाते सति विनश्यतीत्यर्थः ॥ १ ॥ किञ्च—



जे आवि मंदित्ति गुरुं विइत्ता ।
डहरे इमे अप्पसुअत्ति नच्चा ॥
हीलंति मिच्छं पडिवज्जमाणा ।
करंति आसायण ते गुरूणं ॥ २ ॥

छा० ये चाऽपि मन्द इति गुरुं विदित्वा ।
डहरो(अल्पवयाः)ऽयमल्पश्रुत इति ज्ञात्वा ॥
हीलयन्ति(अनाद्रियन्ते) मिथ्यात्वं प्रतिपद्यमानाः ।
कुर्वन्त्याशातनां ते गुरूणाम् ॥ २ ॥



'जे आवि०'—ये चाऽपि केचन द्रव्यसाधवो मन्द इति गुरुं विदित्वा—क्षयोपशमवैचित्र्यात् तन्त्रयुक्त्या-ऽऽलोचनाऽसमर्थः सत्प्रज्ञाविकल इति स्वमाचार्यं ज्ञात्वा, तथा कारणानन्तरस्थापितमप्राप्तवयसं 'डहरोऽयम्'—

अप्राप्तवया खल्वयम्, तथाऽल्पश्रुत इत्यनधीतागम इति विज्ञाय, किमित्याह—"हीलयन्ति असूयया[1] 'महाप्रज्ञस्त्वम्, बहुश्रुतस्त्वम्' इत्येवं मिथ्यात्वं प्रतिपद्यमानाः"—इति गुरुर्न हीलनीय इति तत्त्वमन्यथाऽवगच्छतः कुर्वन्त्याशातनां—लघुतापादनरूपां ते द्रव्यसाधवो गुरुणामाचार्याणां तत्स्थापनाया अबहुमानेन, एकगुर्वाशातनायां सर्वेषामाशातनेति बहुवचनम्, अथवा कुर्वन्त्याशातनाम्—सम्यग्दर्शनादिभावापन्हासरूपां, ते गुरूणां सम्बान्धिनीं, तन्निमित्तत्वात् ॥ २ ॥
अतो न कार्या हीलनेत्याह—

पगईइ मंदा वि भवंति एगे ।
डहरा वि अ जे सुअबुद्धोववेआ ॥
आयारमंता गुणसुट्ठिअप्पा ।
जे हीलिआ सिहिरिव भास कुज्जा ॥ ३ ॥

छा० प्रकृत्या मन्दा अपि भवन्त्येके ।
अल्पवयसोऽपि च ये श्रुतबोधोपपेताः ॥
आचारवन्तो गुणसुस्थितात्मानः ।
येऽनादृताः शिखीव भस्म कुर्युः ॥ ३ ॥



---

१ 'सूययाऽसूयया खिसयन्ति, सूययाऽतिप्रज्ञस्त्वं वयोवृद्धो बहुश्रुत इति, असूयया वा मन्दप्रज्ञस्त्वमित्यादि' प्रत्यन्तरे ।

'पगईइ०'—प्रकृत्या—स्वभावेन मन्दा अपि—सद्बुद्धिरहिता अपि भवन्त्येके केचन वयोवृद्धा अपि, तथा डहरा अपि चाऽपरिणता अपि च वयसाऽन्येऽमन्दा भवन्तीति वाक्यशेषः । किंविशिष्टाः? इत्याह—ये श्रुतबुद्ध्युपेताः, तथा सत्प्रज्ञावन्तः श्रुतेन बुद्धिभावेन (वा) भाविनीं वृत्तिमाश्रित्य अल्पश्रुता इति, द्वयेऽप्याचारवन्तः—ज्ञानाद्याचारसमन्विताः, गुणसुस्थितात्मानः—संग्रहोपग्रहादिषु गुणेषु सुष्ठु—भावसारं स्थित आत्मा येषां ते तथाविधा न हीलनीयाः, ये हीलिताः शिखीव—अग्निरिव (इन्धनं) 'भास'—भस्मसात्कुर्युः ॥ ३ ॥ विशेषेण डहरहीलनादोषमाह—

जे आवि नागं डहरं ति नच्चा ।
आसायए से अहिआय होइ ॥
एवायरिअं पि हु हीलयंतो ।
निअच्छइ जाइपहं खु मंदे ॥ ४ ॥

छा० ये चाऽपि नागमल्पवयसमिति ज्ञात्वा ।
आशातयेयुः सोऽहिताय भवति ॥
एवमाचार्यमप्यनाद्रियमाणः ।
नियच्छति जातिपन्थानं खलु मन्दः ॥ ४ ॥



'जे आवि०'—यश्चाऽपि कश्चिदज्ञो नागं डहरमिति ज्ञात्वा आशातयति—किलिञ्चादिना कदर्थयति स

कदर्थ्यमानो नागः से–तस्य कदर्थकस्य अहिताय भवति, एवमाचार्यमपि हीलयन् जातिपथं(पन्थानं)–द्वीन्द्रिया-दिजातिमार्गं मन्दः–अज्ञः संसारे परिभ्रमतीति ॥ ४ ॥



आसीविसो वा वि परं सुरुट्ठो ।
किं जीवनासाउ परं नु कुज्जा ॥
आयरिअपाया पुण अप्पसण्णा ।
अबोहि आसायण णत्थि मुक्खो ॥ ५ ॥

छा० आशीविषो वाऽपि परं सुरुष्टः ।
किं जीवनाशात् परं नु कुर्यात् ॥
आचार्यपादाः पुनरप्रसन्नाः ।
अबोधिमाशातनया नाऽस्ति मोक्षः ॥ ५ ॥

'आसीविसो०'–आशीविषश्चाऽपि–सर्पोऽपि परं सुरुष्टः सन् किं जीवितनाशात्परं कुर्यात् ? आचार्य-पादाः पुनरप्रसन्नाः किं कुर्वन्तीत्याह–अबोधिं–मिथ्यात्वं यतश्चैवमत आशातनया गुरोर्नाऽस्ति मोक्षः ॥ ५ ॥



जो पावगं जलिअमवक्कमिज्जा ।
आसीविसं वा वि हु कोवइज्जा ॥

जो वा विसं खायइ जीविअट्ठी ।
एसोवमासायणया गुरूणं ॥ ६ ॥

छा० यः पावकं ज्वलितमपक्राम्येत् ।
आशीविषं वाऽपि हि कोपयेत् ॥
यो वा विषं खादति जीवितार्थी ।
एषोपमाऽऽशातनाया गुरूणाम् ॥ ६ ॥

'जो पावगं०'—यः पावकं ज्वलितम् सन्तमवक्रामेत्—अवष्टभ्य तिष्ठति, आशीविषं वाऽपि (हि) कोपयेद्यो वा विषं खादति जीवितार्थी, एषा उपमा आशातनया गुरूणां सम्बन्धिन्या ॥ ६ ॥

सिआ हु से पावय णो डहिज्जा ।
आसीविसो वा कुविओ न भक्खे ॥
सिआ विसं हालहलं न मारे ।
न यावि मुक्खो गुरुहीलणाए ॥ ७ ॥

छा० स्याद्धि स पावको न दहेत् ।
आशीविषो वा कुपितो न भक्षयेत् ॥

स्याद्विषं हालाहलं न मारयेत्।
न चाऽपि मोक्षो गुर्ववज्ञया(गुरुहीलनातः) ॥ ७ ॥

'सिआ०'—स्यात्कदाचिन्मन्त्रादिप्रतिबन्धादसौ पावको न दहेत्, आशीविषो वा कुपितो न भक्षयेत्, स्यात्कदाचिद्विषं हालाहलम्—अतिरौद्रं न मारयेत्, एवमेतत्कदाचिद्भवति, न चाऽपि मोक्षो गुरुहीलनया ॥ ७ ॥

जो पव्वयं सिरसा भित्तुमिच्छे।
सुत्तं च सीहं पडिबोहइज्जा ॥
जो वा दए सत्तिअग्गे पहारं।
एसोवमासायणया गुरूणं ॥ ८ ॥

छा० यः पर्वतं शिरसा भेत्तुमिच्छेत्।
सुप्तं च सिंहं प्रतिबोधयेत् ॥
यो वा ददीत शक्त्यग्रे प्रहारम्।
एषोपमाऽऽशातनाया गुरूणाम् ॥ ८ ॥

'जो पव्वयं०'—यः पर्वतं शिरसा भेत्तुमिच्छेत्, सुप्तं च सिंहं प्रतिबोधयेत्, यो वा शक्त्यग्रे प्रहारं ददाति हस्तेन, एषोपमाऽऽशातनया गुरूणाम् ॥ ८ ॥ अत्र विशेषमाह—

सिआ हु सीसेण गिरिं पि भिंदे ।
सिआ हु सीहो कुविओ न भक्खे ॥
सिआ न भिंदिज्ज व सत्तिअग्गं ।
न यावि मुक्खो गुरुहीलणाए ॥ ९ ॥

छा० स्याद्धि शीर्षेण गिरिमपि भिन्द्यात् ।
स्याद्धि सिंहः कुपितो न भक्षयेत् ॥
स्यान्न भिन्द्याद्वा शक्त्यग्रम् ।
न चाऽपि मोक्षो गुर्ववज्ञया(गुरुहीलनातः) ॥ ९ ॥

'सिआ हु०'–स्यात्कदाचित्प्रभावाच्छिरसा गिरिमपि भिन्द्यात्, स्यान्मन्त्रादिप्रभावात् सिंहः कुपितो न भक्षयेत्, स्याद्देवताऽनुग्रहादेर्न भिन्द्यात्–शक्त्यग्रे प्रहारं दत्तेऽपि, एवमेतत्कदाचिद्भवति, न चाऽपि मोक्षो गुरुहीलनया ॥ ९ ॥

आयरियपाया पुण अप्पसण्णा ।
अबोहि आसायण णत्थि मुक्खो ॥



---

१ वासुदेवादिः ( प्रभावातिशया ) ।

तम्हा अणाबाहसुहाभिकंखी ।
गुरुप्पसायाभिमुहो रमिज्जा ॥ १० ॥

छा० आचार्यपादाः पुनरप्रसन्नाः ।
अबोधिमाशातनया नाऽस्ति मोक्षः ॥
तस्मादनाबाधसुखाभिकांक्षी ।
गुरुप्रसादाभिमुखो रमेत ॥ १० ॥

'आयरिय०'—पूर्वार्द्धः पूर्ववत्, यस्मादेवं तस्मादनाबाधसुखाभिकांक्षी—मोक्षसुखाभिलाषी (साधुः) गुरुप्रसादाभिमुखो रमेत—वर्तेत ॥ १० ॥ कथं रमेत ? इत्याह—

जहाहिअग्गी जलणं नमंसे ।
नाणाहुइमंतपयाभिसित्तं ॥
एवायरिअं उवचिट्ठइज्जा ।
अणंतणाणोवगओ वि संतो ॥ ११ ॥

छा० यथाऽऽहिताग्निर्ज्वलनं नमस्यति ।
नानाऽऽहुतिमन्त्रपदाभिषिक्तम् ॥

एवमाचार्यमुपतिष्ठेत ।
अनन्तज्ञानोपगतोऽपि सन् ॥ ११ ॥

'जहाहिअग्गी०'—यथाऽऽहिताग्निर्ब्राह्मणोऽनलं नमस्यति 'नाणाहुइ०'—नानाऽऽहुतिमन्त्रपदाभिषिक्तम्—(तत्र) आहुतयो घृताद्याः, मन्त्रपदानि—'अग्नये स्वाहा' इत्यादीनि, तैरभिषिक्तम्, एवमग्निमिवाचार्यमुपतिष्ठेत—सेवेत, अनन्तज्ञानोपगतोऽपि सन् ॥११॥ एतदेव स्पष्टयति—

जस्संतिए धम्मपयाइं सिक्खे ।
तस्संतिए वेणइयं पउंजे ॥
सक्कारए सिरसा पंजलीओ ।
कायग्गिरा भो मणसा य निच्चं ॥ १२ ॥

छा० यस्यान्तिके धर्मपदानि शिक्षेत ।
तस्यान्तिके वैनयिकं प्रयुञ्जीत ॥
सत्कारयेच्छिरसा प्राञ्जलिकः ।
कायेन गिरा 'भो' मनसा च नित्यम् ॥ १२ ॥

'जस्संतिए०'—यस्याऽन्तिके धर्मपदानि शिक्षेत तस्याऽन्तिके वैनयिकं प्रयुञ्जीत, सत्कारयेदभ्युत्थाना-

तम्हा अणाबाहसुहाभिकंखी ।
गुरुप्पसायाभिमुहो रमिज्जा ॥ १० ॥

छा० आचार्यपादाः पुनरप्रसन्नाः ।
अबोधिमाशातनया नाऽस्ति मोक्षः ॥
तस्मादनाबाधसुखाभिकांक्षी ।
गुरुप्रसादाभिमुखो रमेत ॥ १० ॥

'आयरिय०'—पूर्वार्द्धः पूर्ववत्, यस्मादेवं तस्मादनाबाधसुखाभिकांक्षी—मोक्षसुखाभिलाषी (साधुः) गुरुप्रसादाभिमुखो रमेत—वर्तेत ॥ १० ॥ कथं रमेत ? इत्याह—

जहाहिअग्गी जलणं नमंसे ।
नाणाहुइमंतपयाभिसित्तं ॥
एवायरिअं उवचिट्ठइज्जा ।
अणंतणाणोवगओ वि संतो ॥ ११ ॥

छा० यथाऽऽहिताग्निर्ज्वलनं नमस्यति ।
नानाऽऽहुतिमन्त्रपदाभिषिक्तम् ॥

एवमाचार्यमुपतिष्ठेत ।
अनन्तज्ञानोपगतोऽपि सन् ॥ ११ ॥

'जहाहिअग्गी०'—यथाऽऽहिताग्निर्ब्राह्मणोऽनलं नमस्यति 'नाणाहुइ०'—नानाऽऽहुतिमन्त्रपदाभिषिक्तम्—(तत्र) आहुतयो घृताद्याः, मन्त्रपदानि—'अग्नये स्वाहा' इत्यादीनि, तैरभिषिक्तम्, एवमग्निमिवाचार्यमुपतिष्ठेत—सेवेत, अनन्तज्ञानोपगतोऽपि सन् ॥११॥ एतदेव स्पष्टयति—

जस्संतिए धम्मपयाइं सिक्खे ।
तस्संतिए वेणइयं पउंजे ॥
सक्कारए सिरसा पंजलीओ ।
कायग्गिरा भो मणसा य निच्चं ॥ १२ ॥

छा० यस्यान्तिके धर्मपदानि शिक्षेत ।
तस्यान्तिके वैनयिकं प्रयुञ्जीत ॥
सत्कारयेच्छिरसा प्राञ्जलिकः ।
कायेन गिरा 'भो' मनसा च नित्यम् ॥ १२ ॥



'जस्संतिए०'—यस्याऽन्तिके धर्मपदानि शिक्षेत तस्याऽन्तिके वैनयिकं प्रयुञ्जीत, सत्कारयेदभ्युत्थाना-

दिना, शिरसा प्राञ्जलिः सन्, कायेन गिरा–'मस्तकेन वन्दे' इत्यादिरूपया, 'भो' इति शिष्याऽऽमन्त्रणम्, मनसा च नित्यं–सदैव ॥१२॥ एवं च मनसि कुर्यादित्याह–

लज्जा दया संजम बंभचेरं ।
कल्लाणभागिस्स विसोहिठाणं ॥
जे मे गुरू सययमणुसासयंति ।
तेऽहं गुरू सययं पूअयामि ॥ १३ ॥

छा० लज्जा–दया–संयम–ब्रह्मचर्यम् ।
कल्याणभाजो विशुद्धिस्थानम् ॥
ये मां गुरवः सततमनुशासयन्ति ।
तानहं गुरून् सततं पूजयामि ॥ १३ ॥

'लज्जा दया०'–लज्जा दया संयमो ब्रह्मचर्यम्, एतल्लज्जादि कल्याणभागिनः–मोक्षभागिनो जीवस्य विशोधिस्थानं–कर्ममलापनयनस्थानम्, अनेन ये मां गुरवः सततमनुशासयन्ति तानहं गुरून् सततं पूजयामि ॥१३॥

जहा णिसंते तवणच्चिमाली ।
पभासइ केवलभारहं तु ॥

एवायरिओ सुअसीलबुद्धिए ।
विरायइ सुरमज्झे व इंदो ॥ १४ ॥
छा० यथा निशान्ते तपनोऽर्चिर्माली ।
प्रभासते केवलभारतं तु ॥
एवमाचार्यः श्रुतशीलबुद्ध्या ।
विराजते सुरमध्य इव इन्द्रः ॥ १४ ॥

'जहा०'—यथा निशान्ते—रात्र्यवसाने, दिवस इत्यर्थः, तपन्नर्चिर्माली—सूर्यः प्रभासयते—उद्योतयति केवलं—संपूर्णं भारतं, 'तु'—शब्दादन्यच्च क्रमेण, एवं सूर्य इव आचार्यः श्रुतशीलबुद्ध्या युक्तः सन् प्रकाशयति जीवादितत्त्वान् । एवञ्च वर्तमानः साधुभिः परिवृतो विराजते सुरमध्य इव इन्द्रः ॥१४॥

जहा ससी कोमुइजोगजुत्तो ।
नक्खत्त-तारागण-परिवुडप्पा ॥
खे सोहइ विमले अब्भमुक्के ।
एवं गणी सोहइ भिक्खुमज्झे ॥ १५ ॥
छा० यथा शशी कौमुदीयोगयुक्तः ।
नक्षत्र-तारागण-परिवृतात्मा ॥

खे शोभते विमलेऽभ्रमुक्ते ।
एवं गणी शोभते भिक्षुमध्ये ॥ १५ ॥

'जहा०'—यथा शशी—चन्द्रः कौमुदीयोगयुक्तः—कार्तिकपौर्णिमास्यामुदितमित्यर्थः, नक्षत्र-तारागण-परिवृताऽऽत्मा खे—आकाशे शोभते विमलेऽभ्रमुक्ते, एवं चन्द्र इव गणी-आचार्यः शोभते भिक्षुमध्ये—साधुमध्ये ॥ १५ ॥ किञ्च—

महागरा आयरिआ महेसी ।
समाहिजोगे सुअसीलबुद्धिए ॥
संपाविउकामे अणुत्तराइं ।
आराहए तोसए धम्मकामी ॥ १६ ॥

छा० महाकरा आचार्या महर्षयः ।
समाधियोगेन श्रुतशीलबुद्ध्या ॥
सम्प्राप्तुकामोऽनुत्तराणि ।
आराधयेत्तोषयेद्धर्मकामी ॥ १६ ॥



'महागरा०'—महाकराः—ज्ञानादिभावरत्नाकरा आचार्या महैषिणः—मोक्षैषिणः 'समाधियोगश्रुतशील-बुद्धिभिः'—समाधियोगैः—ध्यानविशेषैः, श्रुतेन—द्वादशाङ्गाभ्यासेन, शीलेन—सदाचारेण, बुद्ध्या—औत्पत्तिक्यादिरूपया,

अन्ये तु व्याचक्षते–समाधियोगश्रुतशीलबुद्धीनां महाकरा इति । सम्प्राप्तुकामोऽनुत्तराणि ज्ञानादीनि ( तान् ) आराधयेत्, विनयकरणेन, न सकृदेव, अपि तु तोषयेत् तानेवम्भूतानाचार्यान्, धर्मकामी–साधुः ॥ १६ ॥



सुच्चाण मेहावि सुभासिआइं ।
सुस्सूसइ आयरिअ अप्पमत्तो ॥
आराहइत्ताण गुणे अणेगे ।
से पावइ सिद्धिमणुत्तरं ॥ १७ ॥ त्ति बेमि ।

छा० श्रुत्वा मेधावी सुभाषितानि ।
शुश्रूषत आचार्यमप्रमत्तः ॥
आराध्य गुणाननेकान् ।
स प्राप्नोति सिद्धिमनुत्तराम् ॥ १७ ॥ इति ब्रवीमि ।

'सुच्चाण०'–श्रुत्वा मेधावी सुभाषितानि–गुर्वाराधनाफलाऽभिधायीनि शुश्रूषयेदाचार्यान्, अप्रमत्तः–यतिः, य एव गुरुशुश्रूषापरः स आराध्य गुणान् अनेकान् प्राप्नोति सिद्धिमनुत्तराम् ॥१७॥ इति ब्रवीमीति पूर्ववत् । इति विनयसमाध्यध्ययनस्य नवमस्य प्रथमोद्देशाऽवचूर्णिः ।





## ॥ अथ द्वितीयोद्देशः ॥



विनयाऽधिकारवानेव द्वितीय उच्यते—

मूलाउ खंधप्पभवो दुमस्स ।
खंधाउ पच्छा समुविंति साहा ॥
साहप्पसाहा विरुहंति पत्ता ।
तओ सि[1] पुप्फं च फलं रसो अ ॥ १ ॥

छा० मूलात्स्कन्धप्रभवो द्रुमस्य ।
स्कन्धात्पश्चात्समुद्यान्ति शाखाः ॥
शाखाप्रशाखाभ्यो विरोहन्ति पत्राणि ।
ततस्तस्य पुष्पं च फलं रसश्च ॥ १ ॥

'मूलाउ०'—मूलात् स्कन्धप्रभवः—स्थूडोत्पत्तिर्द्रुमस्य, स्कन्धात् पश्चात्—तदनु समुपयान्ति शाखाः, शाखाभ्यः प्रशाखाः, 'विरुहंति'त्ति—विरोहन्ति—जायन्ते, तेभ्योऽपि विरोहन्ति पत्राणि, ततः से—तस्य द्रुमस्य पुष्पं च फलं च रसश्च ॥१॥ दृष्टान्तमुक्त्वा दार्ष्टान्तिकयोजनामाह—



---

१ छान्दसत्वात् 'से' इति स्थाने 'सि'।

एवं धम्मस्स विणओ मूलं परमो से मुक्खो ।
जेण कित्तिं सुअं सिग्घं णिस्सेसं चाभिगच्छइ ॥ २ ॥
छा० एवं धर्मस्य विनयो मूलं, परमस्तस्य मोक्षः ।
येन कीर्तिं श्रुतं शीघ्रं, निःशेषं चाभिगच्छति ॥ २ ॥

'एवं धम्मस्स०'—एवं धर्मकल्पवृक्षस्य विनयो मूलं, परमः—प्रधानरसकल्पः से—तस्य विनयमूलस्य मोक्षः, स्कन्धादिकल्पानि सुराऽसुरसुखानि, येनेति [तृतीया पञ्चम्यर्थे] यतो विनयात् पत्रकल्पां कीर्तिं, पुष्पकल्पं श्रुतं, श्लाघ्यं निःशेषं—सम्पूर्णं चाऽऽधिगच्छति—प्राप्नोति ॥२॥ अविनयवतो दोषमाह—

जे अ चंडे मिए थद्धे दुव्वाई निअडी सढे ।
वुज्झइ से अविणीअप्पा कट्ठं सोअगयं जहा ॥ ३ ॥
छा० यश्च चण्डो मृगः स्तब्धः, दुर्वादी निकृती शठः ।
उह्यतेऽसावविनीतात्मा, काष्ठं श्रोतोगतं यथा ॥ ३ ॥

'जे अ०'—यश्च चण्डः—रोषणः, मृगः—मूर्खः, स्तब्धः—जात्यादिमदोन्मत्तः, दुर्वादी—अप्रियवक्ता, निकृतिमान्—मायावी, शठः—संयमयोगेष्वनादृतः, एतेभ्यो दोषेभ्यो यो विनयं करोति, 'वुज्झइ'त्ति उह्यते स संसारस्रोतसा अविनीतात्मा, किमिवेत्याह—काष्ठं स्रोतोगतं यथा ॥ ३ ॥ किञ्च—

विणयम्मि जो उवाएण चोइओ कुप्पइ नरो ।
दिव्वं सो सिरिमिज्जंतिं दंडेण पडिसेहए ॥ ४ ॥
छा० विनये य उपायेन, नोदितः कुप्यति नरः ।
दिव्यां स श्रियमायान्तीं, दण्डेन प्रतिषेधयति ॥ ४ ॥

'विणयम्मि०'–विनये य उपायेन–प्रका(एका)न्तमृदुरूपेण चोदितः–उक्तः कुप्यति नरः, दिव्यां स पुमान् श्रियमागच्छन्तीं दण्डेन प्रतिषेधयति ॥ ४ ॥ अविनयदोषमाह–

तहेव अविणीअप्पा उववज्झा हया गया ।
दीसंति दुहमेहंता आभिओगमुवट्ठिआ ॥ ५ ॥
छा० तथैवाविनीतात्मानः, उपवाह्या हया गजाः ।
दृश्यन्ते दुःखमेधयन्तः, आभियोग्यमुपस्थिताः ॥ ५ ॥

'तहेव०'–तथैव इति, तथा चैते अविनीतात्मानः–विनयरहिता अनात्मज्ञाः, उपवाह्यानां राजादिवल्लभानां एते कर्मकरा इति औपवाह्या हया गजाः, उपलक्षणमेतत्, महिषिकादीनामिति । एते किमित्याह–दृश्यन्ते अविनयदोषेण तृणादिवोढारः, दुःखमेधमानाः, अनेकार्थत्वात्, अनुभवन्तः, आभियोग्यं–कर्मकरत्वमुपस्थिताः–प्राप्ताः ॥५॥ एतेष्वेव विनयगुणमाह–

तहेव सुविणीअप्पा उववज्झा हया गया ।
दीसंति सुहमेहंता इड्ढिं पत्ता महाजसा ॥ ६ ॥

छा० तथैव सुविनीतात्मानः, उपवाह्या हया गजाः ।
दृश्यन्ते सुखमेधयन्तः, ऋद्धिं प्राप्ता महायशसः ॥ ६ ॥

'तहेव०'—तथैव सुविनीतात्मान औपवाह्या हया गजा दृश्यन्ते विनयगुणेन सुखमेधमानाः, ऋद्धिं प्राप्ताः—विशिष्टभूषणालयभोजनादिभावतः प्राप्तर्द्धयः, महायशसः—विख्यातसद्गुणाः ॥ ६ ॥ उक्ततिर्यञ्चमाश्रित्य विनयः, इदानीं मनुष्यानधिकृत्याह—

तहेव अविणीअप्पा लोगंसि नरनारीओ ।
दीसंति दुहमेहंता छाया ते विगलिंदिआ ॥ ७ ॥

छा० तथैवाविनीतात्मानः, लोके नरनार्यः ।
दृश्यन्ते दुःखमेधयन्त्यः, छातास्ते विकलेन्द्रियाः ॥ ७ ॥

'तहेव०'—तथैवाऽविनीतात्मानो लोकेऽस्मिन्—मनुष्यलोके नरनार्यो दृश्यन्ते दुःखमेधमानाः, छाताः(ताः)-कशाघातव्रणाङ्कितशरीराः, विगलितेन्द्रियाः—अपनीतनासिकादीन्द्रियाः पारदारिकादय इति ॥ ७ ॥

दंडसत्थपरिज्जुण्णा असब्भवयणेहि अ ।
कलुणा विवण्णछंदा खुप्पिवासाइ परिगया ॥ ८ ॥

छा० दण्डशस्त्रपरिजीर्णाः, असभ्यवचनैश्च ।
करुणा व्यापन्नच्छन्दसः, क्षुत्पिपासादि-परिगताः ॥ ८ ॥

'दंडसत्थ०'-दण्डशस्त्राभ्या परिजीर्णाः-समन्ततो दुर्बलभावमापादिताः, असभ्यवचनैश्च परिजीर्णाः, करुणाः-दीनाः, सता करुणासदीभूताः, आपन्नच्छन्दसः-परायत्ततयाऽपेतस्वाभिप्रायाः, क्षुधा-बुभुक्षया पिपासया-पानेच्छया परिगताः-व्याप्ताः ॥ ८ ॥ विनयफलमाह—

तहेव सुविणीअप्पा लोगंसि नरनारीओ ।
दीसंति सुहमेहंता इड्ढिं पत्ता महाजसा ॥ ९ ॥

छा० तथैव सुविनीतात्मानः, लोके नरनार्यः ।
दृश्यन्ते सुखमेधयन्त्यः, ऋद्धिं प्राप्ता महायशसः ॥ ९ ॥

'तहेव०'-तथैव सुविनीताऽऽत्मानो लोकेऽस्मिन् नरनार्यो दृश्यन्ते सुखमेधमाना ऋद्धिं प्राप्ता महायशसः ॥ ९ ॥ देवानधिकृत्याह—

तहेव अविणीअप्पा देवा जक्खा य गुज्झगा ।
दीसंति दुहमेहंता आभिओगमुवट्ठिआ ॥ १० ॥

छा० तथैवाविनीतात्मानः, देवा यक्षाश्च गुह्यकाः ।
दृश्यन्ते दुःखमेधयन्तः, आभियोग्यमुपस्थिताः ॥ १० ॥

'तहेव०'–तथैवाऽविनीताऽऽत्मानो भवान्तरे अकृतविनया देवा यक्षाश्च व्यन्तराश्च गुह्यकाः–भवनवासिनः, ते–एते दृश्यन्ते आगमभावचक्षुषा दुःखमेधमानाः, पराऽऽज्ञाकरण–परऋद्धिदर्शनादिना, आभियोग्यमुपस्थिताः ॥ १० ॥ विनयफलमाह—

**तहेव सुविणीअप्पा देवा जक्खा य गुज्झगा ।**
**दीसंति सुहमेहंता इड्ढिं पत्ता महाजसा ॥ ११ ॥**

**छा० तथैव सुविनीतात्मानः, देवा यक्षाश्च गुह्यकाः ।**
**दृश्यन्ते सुखमेधयन्तः, ऋद्धिं प्राप्ता महायशसः ॥ ११ ॥**

'तहेव०'–तथैव सुविनीताऽऽत्मानो देवा यक्षाश्च गुह्यका दृश्यन्ते सुखमेधमाना ऋद्धिं प्राप्ता महायशसः ॥ ११ ॥ लौकिकविनयाऽविनयफलमुक्तम्, अधुना विशेषतो लोकोत्तरविनयफलमाह—

**जे आयरिअउवज्झायाणं सुस्सूसा-वयणं-करा ।**
**तेसिं सिक्खा पवड्ढंति जलसित्ता इव पायवा ॥ १२ ॥**

**छा० य आचार्योपाध्यायानां, शुश्रूषा–वचन–कराः ।**
**तेषां शिक्षाः प्रवर्द्धन्ते, जलसिक्ता इव पादपाः ॥ १२ ॥**

'जे आय०'–ये आचार्योपाध्याययोः शुश्रूषावचनकराः, तेषां शिक्षाः–ग्रहणाऽऽसेवनरूपाः प्रवर्द्धन्ते, जलसिक्ता इव पादपाः ॥ १२ ॥ एतच्च मनस्याधाय विनयः कार्य इत्याह—

अप्पणट्ठा परट्ठा वा सिप्पा णेउणिआणि अ ।
गिहिणो उवभोगट्ठा एहलोगस्स कारणा ॥ १३ ॥

छा० आत्मार्थं परार्थं वा, शिल्पानि नैपुण्यानि च ।
गृहिण उपभोगार्थम्, इहलोकस्य कारणात् ॥ १३ ॥

'अप्पणट्ठा०'—आत्मार्थं वा—आत्मनिमित्तं वा, अनेन मे जीविका भविष्यतीति, परार्थं वा—परनिमित्तं वा, पुत्रमहं शास्त्रं ग्राहयिष्यामि, इत्येवं शिल्पानि—कुम्भकारक्रियादीनि नैपुण्यानि च—चित्रादिकलाकौशलानि, गृहिणोऽसंयता उपभोगार्थम्—अन्नपानादिभोगाय शिक्षन्ते इति शेषः, इहलोकस्य कारणम्—निमित्तम् ॥ १३ ॥

जेण बंधं वहं घोरं परिआवं च दारुणं ।
सिक्खमाणा निअच्छंति जुत्ता ते ललिइंदिआ ॥ १४ ॥

छा० येन बन्धं वधं घोरं, परितापं च दारुणम् ।
शिक्षमाणा नियच्छन्ति, युक्तास्ते ललितेन्द्रियाः ॥ १४ ॥

'जेण०'—येन शिल्पादिना शिक्ष्यमाणेन बन्धं—निगडादिभिः, वधं—कषादिभिः, घोरं—रौद्रं परितापं च दारुणं—निर्भर्त्सनादिवचनजनितं शिक्षमाणा गुरोः सकाशान्ने(निय)च्छन्ति—प्राप्नुवन्ति, युक्ताः—नियुक्ताः शिल्पादिग्रहणे ते ललितेन्द्रियाः—गर्भेश्वरराजपुत्रादयः ॥ १४ ॥

ते विमं(वि तं) गुरुं पूअंति तस्स सिप्पस्स कारणा ।
सक्कारंति नमंसंति तुट्ठा निद्देसवत्तिणो ॥ १५ ॥
छा० तेऽपीमं(पि तं) गुरुं पूजयन्ति, तस्य शिल्पस्य कारणात् ।
सत्कारयन्ति नमस्यन्ति, तुष्टा निर्देशवर्तिनः ॥ १५ ॥

'ते वि०'—तेऽपि तं गुरुं बन्धादिकारकमपि पूजयन्ति प्रणामादिना तस्य शिल्पस्येत्वरस्य कारणात्—तन्निमित्तत्वादिति भावः, सत्कारयन्ति वस्त्रादिना, नमस्यन्ति अञ्जलिप्रग्रहणादिना, हृष्टा (तुष्टाः—हृष्टाः) निर्देशवर्तिनः ॥ १५ ॥ अतः—

किं पुण जे सुअग्गाही अणंतहिअकामए ।
आयरिआ जं वए भिक्खू तम्हा तं नाइवत्तए ॥ १६ ॥
किं पुनर्यः श्रुतग्राही, अनन्तहितकामकः ।
आचार्या यद्वदेयुः, भिक्षुस्तस्मात्तन्नातिवर्तयेत् ॥ १६ ॥

'किं पुण०'—किम्पुनर्यः साधुः श्रुतग्राही, अनन्ताहितकामकः-मोक्षकामी, तेन तु सुतरां गुरवः पूजनीयाः, यतश्चैवमत आचार्या यद्वदन्ति भिक्षुस्तस्मात्तदाचार्यवचनं नातिवर्तयेत्, सर्वमेव संपादयेत् ॥ १६ ॥ विनयोपायमाह—

नीअं सिज्जं गइं ठाणं नीअं च आसणाणि अ ।
नीअं च पाए वंदिज्जा नीअं कुज्जा य अंजलिं ॥ १७ ॥

छा० नीचां शय्यां गतिं स्थानं, नीचानि चाऽऽसनानि च ।
नीचं च पादौ वन्देत, नीचं कुर्याच्चाऽञ्जलिम् ॥ १७ ॥

'नीअं०'—नीचां शय्यां—संस्तारकरूपाम्, आचार्यशय्यायाः सकाशादिति योगः, नीचां गतिं—तत्पृष्ठतो नाऽतिदूरे नाऽतिद्रुतं, नीचं स्थानम्—आचार्यस्थानात्, नीचानि आसनानि—पीठकादीनि, नीचं च—अवनतोत्तमाङ्गः सन् पादावाचार्यसत्कौ वन्देत, कचित्प्रश्नादौ नीचं—नम्रकायं कुर्याद्वाऽञ्जलिम्, कुर्यादिति सर्वत्र क्रिया योज्या, नीचां शय्यां कुर्यादिति योगः ॥ १७ ॥ कायविनयमुक्त्वा वाग्विनयमाह—

संघट्टइत्ता काएणं तहा उवहिणामवि ।
खमेह अवराहं मे वइज्ज न पुणुत्ति अ ॥ १८ ॥

छा० सङ्घट्ट्य कायेन, तथोपधिनाऽपि ।
क्षमस्वापराधं मे, वदेन्न पुनरिति च ॥ १८ ॥

'संघट्टइत्ता०'—संघट्ट्य—स्पृष्ट्वा कायेन—देहेन, तथोपधिनाऽपि—कल्पादिना (संघट्ट्य, मिथ्यादुष्कृतपूर्वं प्रणम्य) 'क्षमस्वाऽपराधं—दोषं मे' इति वदेत्, न पुनरिति च—न चाऽहमेवं भूयः करिष्यामि ॥ १८ ॥ बुद्धिमान् स्वयं करोत्येवं, तदन्यः कथमित्याह—

दुग्गओ वा पओएणं चोइओ वहइ रहं ।
एवं दुब्बुद्धि किच्चाणं वुत्तो वुत्तो पकुव्वइ ॥ १९ ॥

छा० दुर्गवो वा प्रतोदेन, चोदितो वहति रथम् ।
एवं दुर्बुद्धिः कृत्यानाम्, उक्त उक्तः प्रकरोति ॥ १९ ॥



'दुग्गओ०'—दुर्गौः(दुर्गव) इव—गलिबलीवर्द इव, प्रतोदेन—आरादण्डरूपेण, चोदितः—विद्धः सन् वहति रथम्, एवं दुर्गौरिव दुर्बुद्धिः शिष्यः कृत्यानामाचार्यादीनामुक्तः पुनरभिहित इत्यर्थः, प्रकरोति—निष्पादयति, उचितकार्याणीति शेषः ॥ १९ ॥ एवं कृतान्यमूनि न शोभनानीत्यत आह—

कालं छंदोवयारं च पडिलेहित्ताण हेऊहिं ।
तेण तेण उवाएण तं तं संपडिवायए ॥ २० ॥
छा० कालं छन्दोपचारं च, प्रतिलेख्य हेतुभिः ।
तेन तेनोपायेन, तत्तत्सम्प्रतिपादयेत् ॥ २० ॥

'काले०'—कालं शरदादि, छन्दः—तदिच्छारूपम् उपचारमाराधनाप्रकारं, 'च'—शब्दादेशादिपरिग्रहः, एतत्प्रत्युपेक्ष्य—ज्ञात्वा हेतुभिः—आकारेङ्गितादिभिः, तेनोपायेन—गृहस्थावर्जनादिना तत्तच्चित्तहरादिरूपमशनादि सम्प्रतिपादयेत् ॥ २० ॥



विवत्ती अविणीअस्स संपत्ती विणीअस्स य ।
जस्सेअं दुहओ णायं सिक्खं से अभिगच्छइ ॥ २१ ॥

छा० विपत्तिरविनीतस्य, सम्प्राप्तिर्विनीतस्य च ।
यस्यैतदुभयतो ज्ञातं, शिक्षां सोऽभिगच्छति ॥ २१ ॥



'विवत्ती०'–विपत्तिरविनीतस्य गुणानां, सम्प्राप्तिर्विनीतस्य च गुणानाम्, एवं यस्यैतद् गुणप्राप्त्यप्राप्तिद्वयम्–'उभयतो विनयाऽविनयाभ्यां सकाशाद्भवति' इत्येवं ज्ञातं स्यात्, शिक्षां–ग्रहणाऽऽसेवनरूपां सोऽधिगच्छति–प्राप्नोति ॥ २१ ॥ अविनीतफलमाह—

जे आवि चंडे मइ–इड्ढि–गारवे ।
पिसुणे नरे साहसहीण–पेसणे ॥
अदिट्ठधम्मे विणए अकोविए ।
असंविभागी न हु तस्स मुक्खो ॥ २२ ॥

छा० यश्चाऽपि चण्डो मति–ऋद्धि–गौरवः ।
पिशुनो नरः साहसहीनप्रेषणः ॥
अदृष्टधर्मा विनयेऽकोविदः ।
असंविभागी न हि तस्य मोक्षः ॥ २२ ॥



'जे आवि०'–यश्चाऽपि चण्डः–प्रव्रजितोऽपि रोषणः, ऋद्धिगौरवमतिः–ऋद्धिगारवेऽभिनिविष्टः, पिशुनः–

पृष्ठि(छ)मांसखादको नरः, साहसिकः–अकृत्यकरणपरः, हीनप्रेषणः–हीनगुर्वाज्ञाकरः, अदृष्टधर्मा–सम्यगनुपलब्धश्रुतादि-धर्मा, विनयेऽकोविदः–विनयविषयेऽपण्डितः, असंविभागी–यत्र क्वचन लाभे न संविभागवान्, नैवं तस्य एवंप्रकारस्य मोक्षः ॥ २२ ॥ उपसंहरन्नाह—



निद्देसवत्ती पुण जे गुरूणं ।
सुअत्थधम्मा विणअम्मि कोविआ ॥
तरित्तु ते ओघमिणं दुरुत्तरं ।
खवित्तु कम्मं गइमुत्तमं गया ॥ २३ ॥ त्ति बेमि ।

छा० निर्देशवर्तिनः पुनर्ये गुरूणाम् ।
श्रुतार्थधर्माणो विनये कोविदाः ॥
तीर्त्वा ते ओघमिमं दुरुत्तरम् ।
क्षपयित्वा कर्म गतिमुत्तमां गताः ॥ २३ ॥ इति ब्रवीमि ।



'निद्देसवत्ती०'–निर्देशवर्तिनः–पुनराज्ञावर्तिनः, ये गुरूणां 'श्रुतार्थधर्माः' [ इति प्राकृतत्वात् ] श्रुत-धर्मार्थाः–गीतार्था इत्यर्थः, विनये कोविदाः, तीर्त्वा ते महासत्त्वा ओघम्–एनं प्रत्यक्षोपलभ्यं भवप्रवाहं दुरुत्तरं,

क्षपयित्वा कर्म गतिमुत्तमां–सिद्धाख्यां गताः ॥ २३ ॥ ब्रवीमीति पूर्ववत् । इति विनयसमाध्यध्ययनस्य नवमस्य द्वितीयोद्देशाऽवचूर्णिः ।





## ॥ अथ तृतीयोद्देशः ॥

विनीतः पूज्य इत्युपदर्शयन्नाह—

आयरिअमग्गिमिवाहिअग्गी ।
सुस्सूसमाणो पडिजागरिज्जा ॥
आलोइअं इंगिअमेव नच्चा ।
जो छंदमाराहयइ स पुज्जो ॥ १ ॥

छा० आचार्यमग्निमिवाऽऽहिताग्निः ।
शुश्रूषमाणः प्रतिजागर्यात् ॥
आलोकितमिङ्गितमेव ज्ञात्वा ।
यश्छन्दमाराधयति स पूज्यः ॥ १ ॥

'आयरिअ०'-आचार्यं सूत्रार्थप्रदम्, अग्निमिवाऽऽहिताग्निर्ब्राह्मणः शुश्रूषमाणः प्रतिजाग्रत्(गृयात्) यावत् तत्कृत्यसम्पादनेनोपचरेत् । आह-'यथाऽऽहिताग्निः' इत्यादिना प्रागिदमुक्तमेव, सत्यम्, किन्तु तदाचार्यमेवाङ्गीकृत्य उक्तम्, इदन्तु रत्नाधिकादिकमप्यधिकृत्योच्यते, वक्ष्यति च-'रायणिएसु विणयं' इत्यादि, प्रतिजागरणोपायमाह-आलोकितमिङ्गितं ज्ञात्वा यः साधुश्छन्दो(न्दम्)-अभिप्रायमेति (आराधयति) स पूज्यः ॥ १ ॥ एतदेवाह—



॥ २८९ ॥

आयारमट्ठा विणयं पउंजे ।
सुस्सूसमाणो परिगिज्झ वक्कं ॥
जहोवइट्ठं अभिकंखमाणो ।
गुरुं तु नासाययइ स पुज्जो ॥ २ ॥

छा० आचारार्थं विनयं प्रयुञ्जीत ।
शुश्रूषमाणः परिगृह्य वाक्यम् ॥
यथोपदिष्टमभिकाङ्क्षन् ।
गुरुं तु नाशातयति स पूज्यः ॥ २ ॥

'आयारमट्ठा०'—आचारार्थं—ज्ञानादिनिमित्तं विनयं प्रयुङ्क्ते, शुश्रूषन्(माणः)—श्रोतुमिच्छन् 'किमयं वक्ष्यतीति', एवं तदनु—तेनोक्ते सति परिगृह्य वाक्यमाचार्यीयं यथोपदिष्टं—यथोक्तमभिकांक्षन् विनयं प्रयुङ्क्ते, अविनयकरणेन गुरुं तु नाशातयति—न हीलयति यः स पूज्यः ॥ २ ॥

रायणिएसु विणयं पउंजे ।
डहरा वि अ जे परिआयजिट्ठा ॥
नीअत्तणे वट्टइ सच्चवाई ।
उवायवं वक्ककरे स पुज्जो ॥ ३ ॥

छा० रात्निकेषु विनयं प्रयुञ्जीत ।
अल्पवयसोऽपि च ये पर्यायज्येष्ठाः ॥
नीचत्वे वर्तते सत्यवादी ।
अवपातवान्वाक्यकरः स पूज्यः ॥ ३ ॥

'रायणिएसु०'—रत्नाधिकेषु विनयं प्रयुङ्क्ते, तथा डहरा अपि च ये वयःश्रुताभ्यां, पर्यायज्येष्ठाः—चिरप्रव्रजिताः, तेषु च विनयं प्रयुङ्क्ते, एवं यो नीचत्वे—गुणाधिकान् प्रति नीचभावे वर्तते, सत्यवादी—अविरुद्धवक्ता, तथाऽवपातवान्—वन्दनशीलो निकटवर्ती वा, यो वाक्यकरः—गुरुनिर्देशकरणशीलः स पूज्यः ॥ ३ ॥

अण्णायउंछं चरइ विसुद्धं ।
जवणट्ठया समुआणं च निच्चं ॥
अलद्धुअं णो परिदेवइज्जा ।
लद्धुं न विकत्थइ स पुज्जो ॥ ४ ॥

छा० अज्ञातोञ्छं चरति विशुद्धम् ।
यापनार्थं समुदानं च नित्यम् ॥
अलब्ध्वा न परिदेवयेत् ।
लब्ध्वा न विकत्थते स पूज्यः ॥ ४ ॥

'अण्णाय०'¹—अज्ञातोञ्छं परिचयाऽकरणेनाऽज्ञातः सन् भावोञ्छं गृहस्थोद्वरितादि चरति, अटित्वाऽऽनीतं भुङ्क्ते, न तु ज्ञातः तद्बहुमतमिति, विशुद्धम्—उद्गमादिदोषरहितम्, यापनार्थं—संयमदेहपालनाय समुदानञ्च—उचित-भिक्षालब्धं नित्यं न तुच्छमपि—अनेकमेव(एकत्रैव)लब्धं कादाचित्कं वा, अलब्ध्वा—अप्राप्य न परिदेवयेत्—नो खेदं यायात्, लब्ध्वा—प्राप्योचितं न विकत्थते—न श्लाघां करोति यः स पूज्यः ॥ ४ ॥

संथारसिज्जासणभत्तपाणे ।
अप्पिच्छया अइलामे वि संते ॥
जो एवमप्पाणभितोसइज्जा ।
संतोसपाहण्णरए स पुज्जो ॥ ५ ॥

छा० संस्तारशय्यासनभक्तपाने ।
अल्पेच्छताऽतिलाभेऽपि सति ॥
य एवमात्मानमभितोषयेत् ।
सन्तोषप्राधान्यरतः स पूज्यः ॥ ५ ॥

'संथार०'¹—संस्तारकशय्याऽऽसनभक्तपानानि एतेष्वल्पेच्छता, अतिलाभे सत्यपि य एवमात्मानमभितोषयति, सन्तोषप्राधान्यरतः—सन्तोष एव प्रधानभावे रतः स पूज्यः ॥ ५ ॥ इन्द्रियसमाधिद्वारेण पूज्यतामाह—

सक्का सहेउ आसाइ कंटया ।
अओमया उच्छहया नरेणं ॥
अणासए जो उ सहिज्ज कंटए ।
वईमए कण्णसरे स पुज्जो ॥ ६ ॥

छा० शक्याः सोढुमाशातः(आशया) कण्टकाः ।
अयोमया उत्सहमानेन नरेण ॥
अनाशयो यस्तु सहेत कण्टकान् ।
वाङ्मयाङ्कर्णशरान् स पूज्यः ॥ ६ ॥

'सक्का०'—शक्याः सोढुमाशया—'इतीदं मे भविष्यतीति प्रत्याशया' कण्टका अयोमयाः—लोहात्मकाः, उत्सहता(मानेन) नरेण—अर्थोद्यमिनेत्यर्थः । अनाशया—फलप्रत्याशया निरीहः सन् यस्तु सहेत कण्टकान् वाङ्मयान् कर्णसरान्—कर्णगामिनः स पूज्यः ॥ ६ ॥

मुहुत्तदुक्खा उ हवंति कंटया ।
अओमया ते वि तओ सुउद्धरा ॥
वायादुरुत्ताणि दुरुद्धराणि ।
वेराणुबंधीणि महब्भयाणि ॥ ७ ॥

छा० मुहूर्तदुःखास्तु भवन्ति कण्टकाः ।
अयोमयास्तेऽपि ततः सूद्धराः ॥
वाग्दुरुक्तानि दुरुद्धराणि ।
वैरानुबन्धीनि महाभयानि ॥ ७ ॥

'मुहुत्तदुक्खा०'—मुहूर्तदुःखा भवन्ति कण्टका अयोमयाः, वेधकाल एव प्रायो दुःखभावात्, तेऽपि ततः-कायात् सूद्धराः, वाग्दुरुक्तानि पुनर्दुरुद्धराणि—दुःखेनोद्ध्रियन्ते, मनोलक्ष्यवेधनात् । वैरानुबन्धीनि श्रवणप्रद्वेषादिना, इह परत्र च, अत एव महाभयानि, कुगतिपातादिभयहेतुत्वात् ॥ ७ ॥

समावयंता वयणाभिघाया ।
कण्णं-गया दुम्मणिअं जणंति ॥
धम्मुत्ति किच्चा परमग्गसूरे ।
जिइंदिए जो सहइ स पुज्जो ॥ ८ ॥

छा० समापतन्तो वचनाभिघाताः ।
कर्णं गता दौर्मनस्यं जनयन्ति ॥
धर्मेति कृत्वा परमार्गशूरः ।
जितेन्द्रियो यः सहते स पूज्यः ॥ ८ ॥

'समावयंता०'—समापतन्तः—एकीभावेनाऽभिमुखं पतन्तः, वचनाऽभिघाताः-खरादिवचनप्रहाराः कर्णं गताः-सन्तः, दौर्मनस्यं जनयन्ति, एवम्भूतान् वचनाऽभिघातान् धर्मेति कृत्वा—सामायिकपरिणामापन्नो न त्वशक्त्यादिना, परमाग्रशूरः—दानसङ्ग्रामशूरापेक्षया प्रधानशूरः, जितेन्द्रियः सन् यः सहते न तु तैर्विकारमुपदर्शयन्(येत्) स पूज्यः ॥ ८ ॥ तथा—

अवण्णवायं च परम्मुहस्स ।
पच्चक्खओ पडिणीअं च भासं ॥
ओहारिणिं अप्पियकारिणिं च ।
भासं न भासिज्ज सया स पुज्जो ॥ ९ ॥

छा० अवर्णवादश्च पराङ्मुखस्य ।
प्रत्यक्षतः प्रत्यनीकां च भाषाम् ॥
अवधारिणीमप्रियकारिणीं च ।
भाषां न भाषेत सदा स पूज्यः ॥ ९ ॥

'अवण्णवायं०'—अवर्णवादं च—अश्लाघावादं च पराङ्मुखस्य, प्रत्यक्षतश्चाऽपकारिणीं भाषाम्, अवधारिणीं—निश्चयरूपाम्, अप्रीतिकारिणीं च भाषां न भाषेत सदा यः स पूज्यः ॥ ९ ॥

अलोलुए अक्कुहए अमाई ।
अपिसुणे आ वि अदीणवित्ती ॥
णो भावए णो वि अ भाविअप्पा ।
अकोउहल्ले अ सया स पुज्जो ॥ १० ॥

छा० अलोलुपोऽकुहकोऽमायी ।
अपिशुनश्चाप्यदीनवृत्तिः ॥
न भावयेन्नापि च भावितात्मा ।
अकौतूहलश्च सदा स पूज्यः ॥ १० ॥

'अलोलुए०'—अलोलुपः—आहारादिष्वलुब्धः, अकुहकः—इन्द्रजालादिरहितः, अमायी—कौटिल्यशून्यः, अपिशुनश्चाऽपि—न छेदभेदकर्ता, अदीनवृत्तिः—आहाराद्यलाभेऽपि शुद्धवृत्तिः, 'णो भावये'—नो भावयेत्, आत्मानमन्येभ्यः सकाशात्, नाऽपि च भावितात्मा—स्वयमन्यपुरतः स्वगुणवर्णनपरः, अकौतुकश्च सदा नटनर्तक्यादिषु यः स पूज्यः ॥ १० ॥



गुणेहिं साहू अगुणेहिंऽसाहू ।
गिण्हाहि साहूगुण मुंचऽसाहू ॥

विआणिआ अप्पगमप्पएण ।
जो रागदोसेहिं समो स पुज्जो ॥ ११ ॥

छा० गुणैः साधुरगुणैरसाधुः ।
गृहाण साधुगुणान्मुञ्चाऽसाधून् ॥
विज्ञायात्मकमात्मकेन ।
यो रागद्वेषयोः समः स पूज्यः ॥ ११ ॥



'गुणेहिं०'–गुणैरनन्तरोदितैः साधुर्भवति, अगुणैरुक्तगुणविपरीतैरसाधुः, यत एवं तस्माद् गृहाण साधुगुणान्, मुञ्चाऽसाधुगुणान्, इति शोभन उपदेशः, एवमधिकृत्य [ प्राकृतशैल्या ] विज्ञापयति—विविधं ज्ञापयति आत्मानमात्मना यस्तथा रागद्वेषसमः–न रागवान् न द्वेषवान् स पूज्यः ॥ ११ ॥

तहेव डहरं च महल्लगं वा ।
इत्थीं पुमं पव्वइअं गिहिं वा ॥
णो हीलए णो वि अ खिंसइज्जा ।
थंभं च कोहं च चए स पुज्जो ॥ १२ ॥



छा० तथैवाऽल्पवयसं वा महान्तं वा ।
स्त्रियं पुमांसं प्रव्रजितं गृहिणं वा ॥

न निन्दयेन्नोऽपि च खेदयेत् ।
स्तम्भं च क्रोधं च त्यजेत्स पूज्यः ॥ १२ ॥

'तहेव०'–तथैव डहरं वा महल्लकं वा, 'वा'–शब्दान्मध्यमं वा, स्त्रियं पुमांसम्, उपलक्षणमेतत्, नपुंसकं वा, प्रव्रजितं गृहिणं वा, 'वा'–शब्दादन्यतीर्थिकं वा, न हीलयति, नाऽपि च खिंसयति, तत्र सूयया असूयया वा सकृद्दुष्टाऽभिधानं हीलनम्, तदेवाऽसकृत् खिंसनमिति, हीलनखिंसनयोश्च निमित्तभूतं स्तम्भं च मानं क्रोधं च रोषं त्यजति यः स पूज्यः ॥ १२ ॥

जे माणिआ सययं माणयंति ।
जत्तेण कण्णं व निवेसयंति ॥
ते माणए माणरिहे तवस्सी ।
जिइंदिए सच्चरए स पुज्जो ॥ १३ ॥

छा० ये मानिताः सततं मानयन्ति ।
यत्नेन कन्यामिव निवेशयन्ति ॥
तान्मानयेन्मानार्हांस्तपस्विनः ।
जितेन्द्रियः सत्यरतः स पूज्यः ॥ १३ ॥

'जे माणिआ०'–ये मानिता अभ्युत्थानादिसत्कारैः सततं शिष्यान् मानयन्ति, श्रुतोपदेशं प्रति चो(नो)–

दनाभिः, तथा यत्नेन कन्यामिव निवेशयन्ति—यथा मातापितरः कन्यां गुणैर्वयसा च संवर्द्ध्य योग्यभर्तरि स्थापयन्ति, एवमाचार्याः शिष्यं सूत्रार्थवेदिनं दृष्ट्वा महत्याचार्यपदे स्थापयन्ति, तानेवम्भूतान् गुरून्मानयति योऽभ्युत्थानादिना मानार्हान्—मानयोग्यान् तपस्वी सन्, 'जितेन्द्रियः सत्यरतः' इति प्राधान्यख्यापनार्थं विशेषणद्वयं, स पूज्यः ॥ १३ ॥

तेसिं गुरूणं गुणसागराणं[१]।
सुच्चाण मेहावि सुभासिआइं ॥
चरे मुणी पंचरए तिगुत्तो ।
चउक्कसायावगए स पुज्जो ॥ १४ ॥

छा० तेषां गुरूणां गुणसागराणाम् ।
श्रुत्वा मेधावी सुभाषितानि ॥
चरेन्मुनिः पञ्चरतस्त्रिगुप्तः ।
चतुष्कषायापगतः स पूज्यः ॥ १४ ॥

'तेसिं०'—तेषां गुरूणां गुणसागराणां श्रुत्वा मेधावी सुभाषितानि, चरति मुनिः पञ्चरतः—पञ्चमहाव्रतसक्तः, त्रिगुप्तः—मनोगुप्त्यादि(मान्), 'चतुष्कषायाऽपगतः' इति अपगतक्रोधादिकषायो यः स पूज्यः ॥ १४ ॥ फलाऽभिधानेन उपसंहरन्नाह—

गुरुमिह सययं पडिअरिअ मुणी ।
जिणमयनिउणे अभिगमकुसले ॥
धुणिअ रयमलं पुरेकडं ।
भासुरमउलं गइं गओ ॥ १५ ॥ त्ति बेमि ।

छा० गुरुमिह सततं प्रतिचर्य मुनिः ।
जिनमतनिपुणोऽभिगमकुशलः ॥
धूत्वा रजोमलं पुराकृतम् ।
भासुरामतुलां गतिं गतः ॥ १५ ॥ इति ब्रवीमि ।

'गुरुमिह०'—गुरुम् इह—मनुष्यलोके सततं परिचर्य—विधिनाऽऽराध्य मुनिः, जिनमतनिपुणः—आगमे प्रवीणः, अभिगमकुशलः—लोकप्राघूर्णकादिप्रतिपत्तिदक्षः स एवम्भूतो विधूय रजोमलं पुराकृतं कर्म क्षपयित्वा, भास्वरां—ज्ञानतेजोमयत्वादतुलाम्, अनन्यसदृशीं गतिं सिद्धिरूपां व्रजति—गच्छति तदा जन्मान्तरेण वा सुकुलं प्रत्यायाति, इत्यादिना[1] प्रकारेण । ब्रवीमीति पूर्ववत् ॥ १५ ॥ इति विनयसमाध्यध्ययनस्य नवमस्य तृतीयोद्देशाऽवचूर्णिः ।



१ 'सुकुलप्रजात्यादिना प्रकारेण' इति बृहद्वृत्तौ पाठः ।

# ॥ अथ चतुर्थोद्देशः ॥





सामान्योक्तविनयविशेषोपदर्शनार्थमाह—

सुअं मे आउसं तेणं भगवया एवमक्खायं । इह खलु थेरेहिं भगवंतेहिं चत्तारि विणयसमाहिठाणा पण्णत्ता । कयरे खलु ते थेरेहिं भगवंतेहिं चत्तारि विणयसमाहिठाणा पण्णत्ता । इमे खलु ते थेरेहिं भगवंतेहिं चत्तारि विणयसमाहिठाणा पण्णत्ता । तंजहा–विणयसमाही, सुअसमाही, तवसमाही, आयारसमाही ।

विणए सुए अ तवे, आयारे निच्चं पंडिआ ।
अभिरामयंति अप्पाणं, जे भवंति जिइंदिआ ॥ १ ॥

छा० श्रुतं मयाऽऽयुष्मन् ! तेन भगवतैवमाख्यातम् । इह खलु स्थविरैर्भगवद्भिश्चत्वारि विनयसमाधिस्थानानि प्रज्ञप्तानि । कतराणि खलु तानि स्थविरैर्भगवद्भिश्चत्वारि विनयसमाधिस्थानानि प्रज्ञप्तानि? एतानि खलु तानि स्थविरैर्भगवद्भिश्चत्वारि विनयसमाधिस्थानानि प्रज्ञप्तानि । तद्यथा–१ विनयसमाधिः, २ श्रुतसमाधिः, ३ तपःसमाधिः, ४ आचारसमाधिः ।

विनये श्रुते च तपसि, आचारे नित्यं पण्डिताः ।
अभिरामयन्त्यात्मानं, ये भवन्ति जितेन्द्रियाः ॥ १ ॥

'सुअं मे०'—'श्रुतं मया आयुष्मन् ! तेन भगवता एवमाख्यातम्' इत्येतद् यथा षड्जीवनिकायां तथा द्रष्टव्यम्, इह—प्रवचने क्षेत्रे वा, 'खलु' विशेषणार्थः, न केवलमत्र किन्त्वन्यत्राऽपि—अन्यतीर्थकृत्प्रवचनेष्वपि स्थविरैर्गणधरैर्भगवद्भिश्चत्वारि विनयसमाधिस्थानानि—विनयसमाधिभेदरूपाणि प्रज्ञप्तानि, भगवतः सकाशे श्रुत्वा ग्रन्थत उपरचितानि इत्यर्थः, 'कतराणि खलु तानि' ? इत्यादिना प्रश्नः, 'अमूनि खलु तानि' इत्यादिना निर्वचनम् । तद्यथेत्युदाहरणोपदर्शनार्थः[1]—विनयसमाधिः, श्रुतसमाधिः, तपःसमाधिः, आचारसमाधिः । विनये विनयाद्वा समाधिः[2], विनयेऽथ श्लोकेन संगृह्णाति—'विणए०'—विनये श्रुते तपसि आचारे च,'च'—स्य व्यवहितः सम्बन्धः, नित्यं पण्डिताः सम्यक् परमार्थवेदिनः किं कुर्वन्तीत्याह—अभिरा(र)मयन्ति—अनेकार्थत्वात्—आभिमुख्ये विनयादिषु युञ्जते आत्मानं ये भवन्ति जितेन्द्रियाः ॥ १ ॥ विनयसमाधिमभिधित्सुराह—

**चउव्विहा खलु विणयसमाही भवइ। तंजहा—अणुसासिज्जंतो सुस्सूसइ १ सम्मं संपडिवज्जइ २ वेअमाराहइ ३ न य भवइ अत्तसंपग्गहिए ४ चउत्थं पयं भवइ। भवइ अ इत्थ सिलोगो—**

**पेहेइ हिआणुसासणं।**
**सुस्सूसइ तं च पुणो अहिट्ठए ॥**
**न य माणमएण मज्जइ।**
**विणयसमाहीइ आययट्ठिए ॥ २ ॥**



---

१ 'उदाहरणोपन्यासार्थः' इत्यपि पाठः । २ 'तत्र समाधानं समाधिः, मनःस्वास्थ्यं, विनये विनयाद्वा समाधिर्विनयसमाधिः, एवं सर्वेष्वपि'—प्रत्यन्तरस्थः पाठः ।

छा० चतुर्विधः खलु विनयसमाधिर्भवति। तद्यथा—अनुशिष्यमाणः शुश्रूषते १ सम्यक् सम्प्रतिपद्यते २ वेदमाराधयति ३ न च भवत्यात्मसम्प्रगृहीतः ४ चतुर्थं पदं भवति। भवति चाऽत्र श्लोकः—

प्रेक्ष्यते हिताऽनुशासनम्।
शुश्रूषते तच्च पुनरधिष्ठापयति॥
न च मानमदेन माद्यति।
विनयसमाधावायतार्थिकः॥ २॥

'चउव्विहा०'—चतुर्विधः खलु विनयसमाधिर्भवति, तद्यथा—'अनुसासिज्जंतो' इत्यादि, अनुशास्यमानः शुश्रूषति—श्रोतुमिच्छति १, अनुशासनं सम्यक् सम्प्रतिपद्यते २, अनुशासनं च एवमाराधयति वेदः—श्रुतज्ञानम् ३, न च भवति आत्मसम्प्रगृहीतः—आत्मैव सम्यक् प्रकर्षेण गृहीतो येन सः, 'अहं विनीतः सुसाधु'रित्येवमादिना, तथा नात्मोत्कर्षप्रधानत्वात्, विनयादेर्न चैवम्भूतो भवतीत्यभिप्रायः ४, चतुर्थं पदं भवति, भवति चाऽत्र श्लोकः—'पेहेइ०'—प्रार्थयति हितानुशासनम्—उपदेशं, शुश्रूषति—अनेकार्थत्वात्—यथाविषयमवबुध्यते, तच्चाऽवबुद्धं सत्पुनरधितिष्ठति—यथावत्करोति, न (च) कुर्वन्नपि मानमदेन—मानगर्वेण माद्यति-मदं याति, विनयसमाधौ—विनयसमाधिविषये आयतार्थिकः—मोक्षार्थी॥ २॥ अथ श्रुतसमाधिमाह—



चउव्विहा खलु सुअसमाही भवइ। तंजहा—सुअं मे भविस्सइत्ति अज्झाइअव्वं भवइ १ एगग्ग-

चित्तो भविस्सामित्ति अज्झाइअव्वं भवइ २ अप्पाणं ठावइस्सामित्ति अज्झाइअव्वं भवइ ३ ठिओ परं ठावइस्सामित्ति अज्झाइअव्वं भवइ ४ चउत्थं पयं भवइ। भवइ अ इत्थ सिलोगो—

नाणमेगग्गचित्तो अ ठिओ ठावयइ परं।
सुआणि अ अहिज्जित्ता रओ सुअसमाहिए ॥ ३ ॥

छा० चतुर्विधः खलु श्रुतसमाधिर्भवति। तद्यथा—श्रुतं मे भविष्यतीत्यध्येतव्यं भवति १ एकाग्रचित्तो भविष्यामीत्यध्येतव्यं भवति २ आत्मानं स्थापयिष्यामीत्यध्येतव्यं भवति ३ स्थितः परं स्थापयिष्यामीत्यध्येतव्यं भवति ४ चतुर्थं पदं भवति। भवति चाऽत्र श्लोकः—

ज्ञानमेकाग्रचित्तश्च, स्थितः स्थापयति परम्।
श्रुतानि चाऽधीत्य, रतः श्रुतसमाधौ ॥ ३ ॥

'चउव्विहा०'—चतुर्विधः खलु श्रुतसमाधिर्भवति, तद्यथा—'श्रुतं मे भविष्यति' अनया बुद्ध्याऽध्येतव्यं भवति १, अध्ययनं कुर्वन्नेकाग्रचित्तो भविष्यामीति अध्येतव्यं भवति २, अनेनालम्बनेन—अध्ययनं कुर्वन् विदितधर्मतत्त्व आत्मानं स्थापयिष्यामि धर्मे, इत्यनेन अध्येतव्यं भवति ३, स्थितः स्वयं धर्मे परं स्थापयिष्यामि धर्मे, इत्यध्येतव्यं भवति ४, चतुर्थं पदं भवति, भवति चाऽत्र श्लोकः—'नाण०'—ज्ञानमध्ययनपरस्य भवति तत्परतया एकाग्रचित्तो भवति, स्थित इति विवेकाद्धर्मे स्थितो भवति, स्वयं धर्मे स्थितत्वात् स्थापयति च परम्, 'सुआणि'—श्रुतानि चाऽधीत्य रतो भवति श्रुतसमाधौ ॥ ३ ॥ अथ तपःसमाधिमाह—

चउव्विहा खलु तवसमाही भवइ । तंजहा–णो इहलोगट्ठयाए तवमहिट्ठिज्जा १ णो परलोगट्ठयाए तवमहिट्ठिज्जा २ णो कित्तिवण्णसद्दसिलोगट्ठयाए तवमहिट्ठिज्जा ३ नण्णत्थ निज्जरट्ठयाए तवमहिट्ठिज्जा ४ चउत्थं पयं भवइ । भवइ अ इत्थ सिलोगो—

विविहगुणतवोरए निच्चं ।
भवइ निरासए निज्जरट्ठिए ॥
तवसा धुणइ पुराणपावगं ।
जुत्तो सया तवसमाहिए ॥ ४ ॥

छा० चतुर्विधः खलु तपःसमाधिर्भवति । तद्यथा–नेहलोकार्थं तपोऽधितिष्ठेत् १ न परलोकार्थं तपोऽधितिष्ठेत् २ न कीर्तिवर्णशद्बश्लोकार्थं तपोऽधितिष्ठेत् ३ नान्यत्र निर्जरार्थात् तपोऽधितिष्ठेत् ४, चतुर्थं पदं भवति । भवति चाऽत्र श्लोकः—

विविधगुणतपोरतो नित्यम् ।
भवति निराशयो निर्जरार्थिकः ॥
तपसा धुनोति पुराणपापकम् ।
युक्तः सदा तपःसमाधिना ॥ ४ ॥

'चउव्विहा०'—चतुर्विधः खलु भवति तपःसमाधिः, तद्यथा—नेहलोकार्थं लब्ध्यादिवाञ्छया तपोऽधितिष्ठेत्—न कुर्यात्, 'धम्मिल्ल'वत् १, न परलोकार्थं तपोऽधितिष्ठेत्, ब्रह्मदत्तवत् २, न कीर्तिवर्णशब्दश्लाघार्थं तपोऽधितिष्ठेत्—तत्र सर्वदिग्व्यापी साधुवादः—कीर्तिः, एकदिग्व्यापी वर्णः, अर्धदिग्व्यापी शब्दः, तत्स्थानमेव श्लाघा ३, नाऽन्यत्र निर्जरार्थम्(र्थात्) इति न कर्मनिर्जरामेका विहाय तपोऽधितिष्ठेत्, अकामः सन् यथा कर्मनिर्जरैव फलं भवति तथाऽधितिष्ठेदित्यर्थः ४। चतुर्थं पदं भवति, भवति चाऽत्र श्लोकः—'विविह०'—विविधगुणतपोरतो नित्यं भवति निराशः—अनिदानः, निर्जरार्थिकः—एवम्भूतस्तपसा धुनाति—अपनयति पुराणपापं—चिरन्तनकर्म युक्तः सदा तपःसमाधौ ॥ ४ ॥ साम्प्रतमाचारसमाधिमाह—

चउव्विहा खलु आयारसमाही भवइ। तंजहा—णो इहलोगट्ठयाए आयारमहिट्ठिज्जा १ णो परलोगट्ठयाए आयारमहिट्ठिज्जा २ णो कित्तिवण्णसद्दसिलोगट्ठयाए आयारमहिट्ठिज्जा ३ नण्णत्थ आरहंतेहिं हेऊहिं आयारमहिट्ठिज्जा ४ चउत्थं पयं भवइ। भवइ अ इत्थ सिलोगो—

जिणवयणरए अतिंतिणे।
पडिपुण्णाययमाययट्ठिए ॥
आयारसमाहिसंवुडे।
भवइ अ दंते भावसंधए ॥ ५ ॥

छा० चतुर्विधः खल्वाचारसमाधिर्भवति । तद्यथा–नो इहलोकार्थमाचारमधितिष्ठेत् १ नो परलोकार्थमाचारमधितिष्ठेत् २ नो कीर्तिवर्णशब्दश्लोकार्थमाचारमधितिष्ठेत् ३ नान्यत्रार्हतेभ्यो हेतुभ्य आचारमधितिष्ठेत् ४ चतुर्थं पदं भवति । भवति चाऽत्र श्लोकः—

जिनवचनरतोऽतिन्तिणः ।
प्रतिपूर्ण आयतमायतार्थिकः ॥
आचारसमाधिसंवृतः ।
भवति च दान्तो भावसन्धकः ॥ ५ ॥

'चउव्विहा०'–चतुर्विधः खलु आचारसमाधिर्भवति, तद्यथा–नेहलोकार्थी मायाद्याचाराभिधानभेदेन, पूर्ववत्, यावत्–नाऽन्यत्र अर्हतः सम्बन्धिभिर्हेतुभिरनाश्रय(व)त्वादिभिराचारं मूलगुणोत्तरगुणमयमधितिष्ठेत्, निरीहः सन् यथा मोक्षपथवर्तीति, चतुर्थं पदं भवति, भवति चाऽत्र श्लोकः–'जिण०'–जिनवचनरतः, अतिन्तिणः–न सकृत् किञ्चिदुक्तः सन् असूयया भूयो भूयो वक्ता, प्रतिपूर्णः सूत्रादिना, आयत(म्) आयतार्थिकः–अत्यन्तं मोक्षार्थी, आचार-समाधिसंवृत इति–आचारे यः समाधिस्तेन स्थगिताऽऽश्रवद्वारः सन्, भवति च दान्तः, भावसन्धकः–भावो मोक्षस्तत्स-न्धकः–आत्मनो मोक्षाऽऽसन्नकारी ॥ ५ ॥ सर्वसमाधिफलमाह—

१ 'नेहलोकार्थमित्यादि चाऽऽचाराऽभिधानभेदेन' इति वृत्तौ ।
२ 'मोक्ष एव भवतीति' वृत्तौ प्रत्यन्तरे चाऽयं पाठः

अभिगमचउरो समाहिओ ।
सुविसुद्धो सुसमाहिअप्पओ ॥
विउलहिअं सुहावहं पुणो ।
कुव्वइ सो पयखेममप्पणो ॥ ६ ॥

छा० अभिगमचतुरः समाधीन् ।
सुविशुद्धः सुसमाहितात्मा ॥
विपुलहितं सुखावहं पुनः ।
करोति स पदक्षेममात्मनः ॥ ६ ॥

'अभिगम०'–अभिगम्य–विज्ञाय, आसेव्य च चतुरः समाधीन्–अनन्तरोदितान्, सुविशुद्धो मनोवाक्कायैः, सुसमाहितात्मा सप्तदशप्रकारे संयमे, विपुलसुखहितावहमिति विपुलं–विस्तीर्णं हितं तदात्वे आयत्यां च पथ्यं–सुखमावहति–प्रापयति यत्तत्तथाविधं करोत्यसौ साधुः पदं–स्थानं क्षेमं–शिवम् आत्मनः–इत्यात्मन एव न त्वन्यस्य, ॥ ६ ॥ इत्येतेन एकान्तक्षणभङ्गव्यवच्छेदमाह—



जाइमरणाउ मुच्चइ ।
इत्थं त्थं च चयइ सव्वसो ॥

सिद्धे वा हवइ सासए ।
देवे वा अप्परए महिड्ढिए ॥ ७ ॥ त्ति बेमि ।

छा० जातिमरणाभ्यां मुच्यते ।
अत्रस्थं(इत्थंस्थं) च त्यजति सर्वशः ॥
सिद्धो वा भवति शाश्वतः ।
देवो वाऽऽल्प(ऽल्प)रतो महर्द्धिकः ॥ ७ ॥ इति ब्रवीमि ।

'जाइ०'—जातिमरणात्—जन्ममरणान्मुच्यते, इत्थं स्थितम्—इत्थंस्थं—नारकादि व्यपदेशबीजं वर्णसंस्थानादि त्यजति, सर्वशः—सर्वैः प्रकारैरपुनर्ग्रहणतया, एवं सिद्धो वा कर्मक्षयसिद्धो भवति शाश्वतः—अपुनरागामी, सावशेषकर्मा देवो (वा) अल्परतः, कण्डूपरिगतकण्डूयनकल्परतरहितः, महर्द्धिकः—अनुत्तरवैमानिकादिः । ब्रवीमीति पूर्ववत् । इति विनयसमाध्यध्ययनस्य नवमस्य चतुर्थोद्देशाऽवचूर्णिः ॥ ७ ॥

॥ विणयसमाहि—अज्झयणं णवमं ॥
॥ इति विनयसमाध्यध्ययनं नवमम् ॥



## ॥ अथ दशमाध्ययनम् ॥





अथ सभिक्ष्वाख्यमारभ्यते, अस्यचाऽयमभिसम्बन्धः। इहानन्तराध्ययने आचारप्रणिहितो यथोचितविनयसम्पन्नो भवत्येतदुक्तम्, इह तु एतेष्वेव नवस्वध्ययनार्थेषु यो व्यवस्थितः स सम्यग्भिक्षुरित्येतदुच्यते, इत्यनेनाऽभिसम्बन्धेनायातमिदमध्ययनम्। तच्चेदम्—

निक्खम्ममाणाइ अ बुद्धवयणे।
निच्चं चित्तसमाहिओ हविज्जा॥
इत्थीण वसं न यावि गच्छे।
वंतं णो पडिआयइ जे स भिक्खू॥ १॥

छा० निष्क्रम्याऽऽज्ञया च बुद्धवचने।
नित्यं चित्तसमाहितो भवेत्॥
स्त्रीणां वशं न चाऽपि गच्छेत्।
वान्तं न प्रत्यापिबति यः स भिक्षुः॥ १॥



'निक्खम्म०'—निष्क्रम्य-प्रव्रज्यां गृहीत्वा, आज्ञया-तीर्थकरगणधरोपदेशेन बुद्धवचने-अवगततत्त्वतीर्थकरगणधरवचने नित्यं चित्तसमाहितः-चित्तेनाभि(ति)प्रसन्नो भवेत्, व्यतिरेकतः समाधानोपायमाह-स्त्रीणां वशं न

चाऽपि गच्छेत्, तद्वशगो हि नियमतो वान्तं प्रत्यापिबति, अतो बुद्धवचनचित्तसमाधानतः सर्वथा स्त्रीवशत्यागात्, अनेनैवोपायेनाऽन्योपायाऽभावात्, वान्तं–परित्यक्तं सद्विषयजम्बालं न प्रत्यापिबति यः स भिक्षुः, भावभिक्षुः ॥ १ ॥

पुढवीं न खणे न खणावए ।
सीओदगं न पिए न पिआवए ॥
अगणिसत्थं जहा सुनिसिअं ।
तं न जले न जलावए जे स भिक्खू ॥ २ ॥

छा० पृथ्वीं न खनेन्न खानयेत् ।
शीतोदकं न पिबेन्न पाययेत् ॥
अग्निशस्त्रं यथा सुनिशितम् ।
तन्न ज्वलेन्न ज्वलयेद्यः स भिक्षुः ॥ २ ॥

'पुढवीं०'–पृथिवीं न खनति न खानयति, [एकग्रहणे तज्जातीयग्रहणमिति न्यायात्] खनन्तमप्यन्यं नाऽनुजानाति, एवं सर्वत्र वेदितव्यम् । शीतोदकं न पिबति न पाययति, अग्निः षड्जीव-घातकः, किं (व)–वदित्याह-शस्त्रं खड्गादि यथा सुनिशितम्-उज्ज्वलितं तद्वत्, तन्न ज्वलति, न ज्वालयति यः स भिक्षुः ॥ २ ॥

अणिलेण न वीए न विआवए ।
हरिआणि न छिंदे न छिंदावए ॥

बीआणि सया विवज्जयंतो ।
सच्चित्तं नाहारए जे स भिक्खू ॥ ३ ॥

छा० अनिलेन न व्यजेन्न व्यजयेत् ।
हरितानि न छिन्द्यान्न छेदयेत् ॥
बीजानि सदा विवर्जयन् ।
सचित्तं नाहरेद्यः स भिक्षुः ॥ ३ ॥

'अणिलेण०'—अनिलेन-अनिलहेतुवस्त्रादिना न वीजयति (व्यजति), न वीजयते (व्यजयति) परैः, हरितानि न छिनत्ति, न छेदयति, बीजानि सदा विवर्जयन् संघट्टनादिना, सचित्तं नाहारयति यः कदाप्यपुष्टालम्बनः स भिक्षुः ॥ ३ ॥ औद्देशिकादिपरिहारेण त्रसस्थावरपरिहारमाह—

वहणं तसथावराण होइ ।
पुढवीतणकट्ठनिस्सिआणं ॥
तम्हा उद्देसिअं न भुंजे ।
णो वि पए न पयावए जे स भिक्खू ॥ ४ ॥

छा० वधनं त्रसस्थावराणां भवति ।
पृथ्वीतृणकाष्ठनिःश्रितानाम् ॥

तस्मादौद्देशिकं न भुञ्जीत ।
नाऽपि पचेन्न पाचयेद्यः स भिक्षुः ॥ ४ ॥

'वहणं०'-वधनं त्रसस्थावराणां भवति कृतौद्देशिके, किंविशिष्टानाम्? पृथिवीतृणकाष्ठानिःसृ(श्रि)तानां तथासमारम्भात्, यस्मादेवं तस्मादौद्देशिकं न भुङ्क्ते, न केवलमेतत्, किन्तु नाऽपि स्वयं पचति, न पाचयत्यन्यैर्यः स भिक्षुः ॥ ४ ॥

रोइअणायपुत्तवयणे ।
अत्तसमे मण्णिज्ज छप्पि काए ॥
पंच य फासे महव्वयाइं ।'
पंचासवसंवरे जे स भिक्खू ॥ ५ ॥

छा० रोचितज्ञातपुत्रवचनः ।
आत्मसमान्मन्येत षडपि कायान् ॥
पञ्च च स्पृशेन्महाव्रतानि ।
पञ्चास्रवसंवरो यः स भिक्षुः ॥ ५ ॥

'रोइअ०'-रोचयित्वा ज्ञातपुत्रवचनं-श्रीमहावीरवचनं प्रियं कृत्वा, आत्मसमान्मन्यते षडपि कायान्, पञ्च

च-चोऽपिशब्दार्थः-पञ्चाऽपि स्पृशति-सेवते महाव्रतानि, पञ्चास्रवसंवृतश्च, द्रव्यतोऽपि पञ्चेन्द्रियसंवृतो यः स भिक्षुः ॥ ५ ॥

चत्तारि वमे सया कसाए।
धुवजोगी अ हविज्ज बुद्धवयणे ॥
अहणे निज्जाअरूवरयए।
गिहिजोगं परिवज्जए जे स भिक्खू ॥ ६ ॥

छा० चतुरो वमेत्सदा कषायान्।
ध्रुवयोगी भवेद्बुद्धवचने ॥
अधनो निर्जातरूपरजतः।
गृहियोगं परिवर्जयेद्यः स भिक्षुः ॥ ६ ॥

'चत्तारि०'—चतुरः क्रोधादीन् वमति कषायान्, ध्रुवयोगी च—उचितनित्ययोगवांश्च भवति, बुद्धवचन इति [ तृतीयार्थे सप्तमी ] तीर्थकरवचनेन करणभूतेन ध्रुवयोगी भवति यथागममेवेति भावः, अधनः—चतुष्पदादिरहितः, निर्जातरूपरजतः—निर्गतस्वर्णरूप्यः, गृहियोगं—गृहस्थसम्बन्धं परिवर्जति यः स भिक्षुः ॥ ६ ॥



सम्मद्दिट्ठी सया अमूढे।
अत्थि हु नाणे तवे संजमे अ ॥

तवसा धुणइ पुराणपावगं ।
मणवयकायसुसंवुडे जे स भिक्खू ॥ ७ ॥

छा० सम्यग्दृष्टिः सदाऽमूढः ।
अस्ति हि ज्ञानं तपः संयमश्च ॥
तपसा धुनोति पुराणपापकम् ।
मनोवचःकायसुसंवृतो यः स भिक्षुः ॥ ७ ॥

'सम्मद्दिट्ठी०'—सम्यग्दृष्टिः सदाऽमूढः—अविप्लुतः सन्नेवं मन्यते—'अस्त्येव ज्ञानं हेयोपादेयविषयमतीन्द्रियेष्वपि तपश्च बाह्याभ्यन्तरकर्ममलापनयनजलरूपं संयमश्च नवकर्मानुपादानरूपः', इत्थं च दृढभावः, तवसा धुनोति पुराणपापम्, भावसारया प्रवृत्त्या मनोवाक्कायसंवृतः, तिसृभिर्गुप्तिभिर्गुप्तो यः स भिक्षु ॥ ७ ॥

तहेव असणं पाणगं वा ।
विविहं खाइम साइमं लभित्ता ॥
होही अट्ठो सुए परे वा ।
तं न निहे न निहावए जे स भिक्खू ॥ ८ ॥



छा० तथैवाऽशनं पानकं वा ।
विविधं खाद्यं स्वाद्यं लब्ध्वा ॥

भविष्यत्यर्थः श्वः परस्मिन्वा ।
तं न निदध्यान्न निधापयेद्यः स भिक्षुः ॥ ८ ॥

'तहेव०'-तथैव पूर्वविधानेन अशनं पानं वा तथा विविधमनेकप्रकारं खाद्यं स्वाद्यं लब्ध्वा-प्राप्य, किमित्याह-'भविष्यत्यर्थः-प्रयोजनमनेन श्वः' परश्वो वेति तदशनादि न निधत्ते-न स्थापयति स्वयं, तथा न वि-(नि)धापयत्यन्यैः, स्थापयन्तमन्यं नाऽनुजानाति यः सर्वथा सन्निधिपरित्यागवान् स भिक्षुः ॥ ८ ॥

तहेव असणं पाणगं वा ।
विविहं खाइम साइमं लभित्ता ॥
छंदिअ साहम्मिआण भुंजे ।
भुच्चा सज्झायरए जे स भिक्खू ॥ ९ ॥

छा० तथैवाऽशन पानकं वा ।
विविधं खाद्यं स्वाद्यं लब्ध्वा ॥
निमन्त्र्य साधर्मिकान्भुञ्जीत ।
भुक्त्वा स्वाध्यायरतो यः स भिक्षुः ॥ ९ ॥



'तहेव०'-तथैवाऽशनं पानकं वा विविधं खाद्यं स्वाद्यं च लब्ध्वा, किमित्याह-छन्दित्वा-निमन्त्र्य समान-

धार्मिकान्-साधून् भुङ्क्ते, स्वात्मतुल्यतया तद्वात्सल्यसिद्धेः, तथा भुक्त्वा स्वाध्यायरतश्च यः स भिक्षुः ॥ ९ ॥ भिक्षुलक्षणाऽधिकार एवाह—



न य वुग्गहिअं कहं कहिज्जा ।
न य कुप्पे निहुइंदिए पसंते ॥
संजमे धुवजोगजुत्ते ।
उवसंते अविहेडए जे स भिक्खू ॥ १० ॥

छा० न च व्युद्ग्राहिकीं कथां कथयेत् ।
न च कुप्येन्निभृतेन्द्रियः प्रशान्तः ॥
संयमे ध्रुवयोगयुक्तः ।
उपशान्तोऽविहेठको यः स भिक्षुः ॥ १० ॥

'न य०'—न च वैग्रहिकीं—कलहप्रतिबद्धां कथां कथयति, सद्भावकथादिष्वपि न च कुप्यति परस्य, अपि तु निभृतेन्द्रियः—अनुद्धतेन्द्रियः, प्रशान्तः—रागादिरहित एवाऽऽस्ते, तथा संयमे सप्तदशविधे ध्रुवं—सर्वकाले योगेन-मनोवाक्कायलक्षणेन युक्तो योगयुक्तः, तथा उपशान्तः—अनाकुलः—कायचापल्यादिरहितः, अविहेड(ठ)कः—न क्वचिदुचितेऽनादरवान्, क्रोधादीनां विक्षेपक इत्यन्ये, यः स भिक्षुः ॥ १० ॥ किञ्च—

जो सहइ हु गामकंटए ।
अक्कोस-पहार-तज्जणाओ अ ॥
भयभेरवसद्द-सप्पहासे ।
समसुहदुक्खसहे अ जे स भिक्खू ॥ ११ ॥

छा० यः सहते हि ग्रामकण्टकान् ।
आक्रोश-प्रहार-तर्जनाश्च ॥
भय-भैरवशब्द-सप्रहासान् ।
समसुखदुःखसहश्च यः स भिक्षुः ॥ ११ ॥

'जो सहइ०'—यः खलु सहते सम्यग् ग्रामकण्टकान्—ग्रामाः—इन्द्रियाणि, तद्दुःखहेतुत्वात्कण्टकास्तान्, आक्रोशान्—प्रहारान्, तर्जनाश्चेति, तत्राऽऽक्रोशो यकारादिभिः, तर्जना असूयादिभिः, भैरवभयाः—अत्यन्तरौद्रभयजनकाः शब्दाः सप्रहासाः, यस्मिन् स्थाने इति गम्यते, तथा तस्मिन् वेतालादिकृतार्तनादाट्टहास इत्यर्थः, अत्रोपसर्गेषु सत्सु समसुखदुःखसहः—अचलितसामायिकभावश्च यः स भिक्षुः ॥ ११ ॥ एतदेव स्पष्टयति—

पडिमं पडिवज्जिआ मसाणे ।
णो भीयए भयभेरवाइं दिस्स ॥

विविहगुणतवोरए अ निच्चं ।
न सरीरं चाभिकंखए जे स भिक्खू ॥ १२ ॥
छा० प्रतिमां प्रतिपद्य स्मशाने ।
नो बिभीयाद्भयभैरवाणि दृष्ट्वा ॥
विविधगुणतपोरतश्च नित्यम् ।
न शरीरं चाभिकाङ्क्षेद्यः स भिक्षुः ॥ १२ ॥

'पडिमं०'—प्रतिमां—मासादिरूपां प्रतिपद्य स्मशाने न बिभेति भैरवमयानि दृष्ट्वा, विविधगुणतपोरतश्च नित्यं नैव शरीरमभिकांक्षते निस्पृहतया वार्त्तमानिकं भावि च य इत्थम्भूतः स भिक्षुः ॥ १२ ॥

असइं वोसट्ठचत्तदेहे ।
अक्कुट्ठे व हए व लूसिए वा ॥
पुढवीसमे मुणी हविज्जा ।
अणिआणे अकोउहल्ले जे स भिक्खू ॥ १३ ॥
छा० असकृद्व्युत्सृष्टत्यक्तदेहः ।
आकुष्टो वा हतो वा लुञ्चितो(लूपितो) वा ॥

पृथ्वीसमो मुनिर्भवेत् ।
अनिदानोऽकौतूहलो यः स भिक्षुः ॥ १३ ॥

'असइं०'–असकृत्सर्वदा व्युत्सृष्टत्यक्तदेहः–व्युत्सृष्टः प्रतिबन्धाभावात्, त्यक्तो विभूषादिकरणात्, आक्रुष्टो (कृष्टो) वा कर्कशवचनैः, हतो वा दण्डादिना, लूषितो वा खड्गादिना, भक्षितो वा श्वशृगालादिना, पृथिवीसमः सर्वसहो मुनिर्भवति, अनिदानोऽकुतूहलश्च नट्यादिषु यः स भिक्षुः ॥ १३ ॥ भिक्षुस्वरूपाऽधिकार एवेदमाह—

अभिभूअ काएण परीसहाइं ।
समुद्धरे जाइपहाउ अप्पयं ॥
विइत्तु जाईमरणं महब्भयं ।
तवे रए सामणिए जे स भिक्खू ॥ १४ ॥

छा० अभिभूय कायेन परीषहान् ।
समुद्धरेज्जातिपथादात्मानम् ॥
विदित्वा जातिमरणं महद्भयम् ।
तपसि रतः श्रामण्ये यः स भिक्षुः ॥ १४ ॥

'अभिभूअ०'–अभिभूय–पराजित्य कायेन परीषहान् (न भिक्षुसिद्धान्तनीत्या) मनोवाग्भ्यामेव, काये-

नाऽनभिभवे तत्त्वतस्तदनभिभावात्, समुद्धरति जातिपथात्–संसारादात्मानं, विदित्वा जातिमरणं महद्भयं तपसि रतः, किम्भूते ? श्रामण्ये–श्रमणानां सम्बन्धिनि य एवम्भूतः स भिक्षुः ॥ १४ ॥



हत्थसंजए पायसंजए ।
वायसंजए संजइंदिए ॥
अज्झप्परए सुसमाहिअप्पा ।
सुत्तत्थं च विआणइ जे स भिक्खू ॥ १५ ॥

छा० हस्तसंयतः पादसंयतः ।
वाक्संयतः संयतेन्द्रियः ॥
अध्यात्मरतः सुसमाहितात्मा ।
सूत्रार्थं च विजानाति यः स भिक्षुः ॥ १५ ॥

'हत्थसंजए०'–हस्तसंयतः, पादसंयतः, कारणं विना कूर्मवल्लीनः, वाक्संयतोऽकुशलवाङ्निरोधात्, कुशलवागुदीरणेन, संयतेन्द्रियः–निवृत्तविषयप्रसरः, अध्यात्मरतः–प्रशस्तध्यानाऽऽसक्तः, सुसमाहितात्मा–ध्यानाऽऽपादकगुणेषु, तथा सूत्रार्थञ्च विजानाति यः स भिक्षुः ॥ १५ ॥



उवहिंमि अमुच्छिए अगिद्धे ।
अण्णायउंछं पुलनिप्पुलाए ॥

कयविक्कयसंनिहिओ विरए ।
सव्वसंगावगए जे स भिक्खू ॥ १६ ॥

छा० उपधावमूर्च्छितोऽगृद्धः ।
अज्ञातोञ्छं पुलाकनिष्पुलाकः ॥
क्रयविक्रयसंनिधितो विरतः ।
सर्वसङ्गापगतो यः स भिक्षुः ॥ १६ ॥

'उवहिंमि०'—उपधौ अमूर्च्छितः, तद्विषयमोहत्यागेनाऽगृद्धः प्रतिबन्धाभावेन, अज्ञातोञ्छं चरतीति शेषः, स्तोकं–स्तोकमित्यर्थः । पुलाकनिष्पुलाक इति संयमासारतापादकदोषरहितः, क्रयविक्रयसन्निधिभ्यो विरतः, सर्वसङ्गाऽपगतश्च यः स भिक्षुः ॥ १६ ॥

अलोलभिक्खू न रसेसु गिद्धे ।
उंछं चरे जीविअणाभिकंखे ॥
इड्ढिं च सक्कारण पूअणं च ।
चयइ ट्ठिअप्पा अणिहे जे स भिक्खू ॥ १७ ॥

छा० अलोलभिक्षुर्न रसेषु गृद्धः ।
उञ्छं चरेज्जीवित नाऽभिकाङ्क्षेत् ॥

ऋद्धिं च सत्कारणपूजनं च ।
त्यजति स्थितात्मा अनिभो(अनीहो) यः स भिक्षुः ॥ १७ ॥

'अलोल०'–अलोलो नाऽप्राप्तप्रार्थनापरो भिक्षुः, न रसेषु गृद्धः, उञ्छं चरति (इति) पूर्ववत् । नवरं तत्रोपधिमाश्रित्योक्तम्, इह त्वाहारमित्यपौनरुक्त्यम्, तथा जीवितम्–असंयमजीवितं नाऽभिकांक्षते । ऋद्धिं च अमर्षौषध्यादिरूपां, सत्कारं वस्त्रादिना, पूजनञ्च स्तवादिना, त्यजति स्थितात्मा ज्ञानादिषु, अनिभः–अमायः, यः स भिक्षुः ॥ १७ ॥

न परं वइज्जासि अयं कुसीले ।
जेणं च कुप्पिज्ज न तं वइज्जा ॥
जाणिअ पत्तेअं पुण्णपावं ।
अत्ताणं न समुक्कसे जे स भिक्खू ॥ १८ ॥

छा० न परं वदेदयं कुशीलः ।
येन च कुप्येन्न तद्वदेत् ॥
ज्ञात्वा प्रत्येकं पुण्यपापम् ।
आत्मानं न समुत्कर्षयेद्यः स भिक्षुः ॥ १८ ॥

'न परं०'–न परं–स्वपक्षविनेयव्यतिरिक्तं वदत्ययं कुशीलः, तदप्रीत्यादिदोषप्रसङ्गात्, स्वपक्षविनेयं तु

शिक्षाग्रहणबुद्ध्या वदत्यपि, येनाऽन्यः कश्चित्कुप्यति न तद्वक्ति, दोषसद्भावेऽपि, ज्ञात्वा प्रत्येकं पुण्यपापं नाऽन्यसम्बन्धि—अन्यस्य भवति, अग्निदाहवेदनावत्, सत्स्वपि गुणेषु नाऽऽत्मानं समुत्कर्षयति यः स भिक्षुः ॥ १८ ॥ मदप्रतिषेधार्थमाह—

न जाइमत्ते न य रूवमत्ते ।
न लाभमत्ते न सुएण मत्ते ॥
मयाणि सव्वाणि विवज्जइत्ता ।
धम्मज्झाणरए जे स भिक्खू ॥ १९ ॥

छा० न जातिमत्तो न च रूपमत्तः ।
न लाभमत्तो न श्रुतेन मत्तः ॥
मदान् सर्वान्विवर्ज्य ।
धर्मध्यानरतो यः स भिक्षुः ॥ १९ ॥

'न जाइ०'—न जातिमत्तः, न च रूपमत्तः, न लाभमत्तः, न श्रुतमत्तः, मदान् सर्वान् विवर्जयन् धर्मध्यानरतो हि यः स भिक्षुः ॥ १९ ॥



पवेअए अज्जपयं महामुणी ।
धम्मे ठिओ ठावयइ परं पि ॥

निक्खम्म वज्जिज्ज कुसीललिंगं ।
न यावि हासं कुहए जे स भिक्खू ॥ २० ॥

छा० प्रवेदयेदार्यपदं महामुनिः ।
धर्मे स्थितः स्थापयति परमपि ॥
निष्क्रम्य वर्जयेत्कुशीललिङ्गम् ।
न चाऽपि हासे कुहको यः स भिक्षुः ॥ २० ॥

'पवेअए०'—प्रवेदयति—कथयत्यार्यपदं—शुद्धधर्मपदं महामुनिः ( परोपकाराय ), धर्मे स्थितः स्थापयति परमपि श्रोतारं, निष्क्रम्य वर्जयति कुशीललिङ्गं—सारम्भादिकुशीलचेष्टितं, न चाऽपि हास्यकुहकः—न हास्यकारि-कुहकयुक्तो यः स भिक्षुः [ अनुस्वारोऽलाक्षणिकः ] ॥ २० ॥ भिक्षुभावफलमाह—

तं देहवासं असुइं असासयं ।
सया चए निच्चहिअट्ठिअप्पा ॥
छिंदित्तु जाइमरणस्स बंधणं ।
उवेइ भिक्खू अपुणागमं गइं ॥ २१ ॥ त्ति बेमि।

छा० तं देहवासमशुचिमशाश्वतम् ।
सदा त्यजेन्नित्यहिते स्थितात्मा ॥

छित्वा जातिमरणस्य बन्धनम् ।
उपैति भिक्षुरपुनरागमां गतिम् ॥ २१ ॥ इति ब्रवीमि ।





'तं देह०'—तं देहवासं—प्रत्यक्षोपलभ्यम् अशुचिमशाश्वतं सदा त्यजति, ममत्वाऽनुबन्धपरित्यागेन, नित्यहितस्थितात्मा—नित्यहिते—सम्यग्दर्शनादौ स्थित आत्मा यस्य स नित्यहितास्थितात्मा, छित्त्वा जातिमरणस्य—संसारस्य बन्धनं—कारणम्, उपैति भिक्षुरपुनरागमां—नित्यां गतिम्—सिद्धिगतिम् । ब्रवीमीति पूर्ववत् ॥ २१ ॥ इति सभिक्ष्वध्ययनस्य दशमस्याऽवचूर्णिः ।

॥ सभिक्खु—अज्झयणं दसमं ॥
॥ इति सभिक्ष्वध्ययनं दशमम् ॥



## ॥ अथ प्रथमा चूलिका ॥





इहानन्तराध्ययने भिक्षुगुणयुक्त एव भिक्षुरुक्तः, स चैवम्भूतोऽपि कदाचित् कर्मपरतन्त्रत्वात् कर्मणश्च बलवत्त्वात् सीदेत्, तत्स्थिरीकरणार्थं चूडाऽभिधीयते।

इह खलु भो! पव्वइएणं उप्पण्णदुक्खेणं संजमे अरइसमावण्णचित्तेणं ओहाणुप्पेहिणा अणोहाइएणं चेव हयरस्सिगयंकुसपोअपडागाभूआइं इमाइं अट्ठारसठाणाइं सम्मं संपडिलेहिअव्वाइं भवंति। तंजहा—

हं भो! दुस्समाए दुप्पजीवी ॥ १ ॥

छा० इह खलु भो! प्रव्रजितेनोत्पन्नदुःखेन संयमेऽरतिसमापन्नचित्तेन ओघानुप्रेक्षिणाऽनौचिकेन चैव हयरश्मि–गजाङ्कुश–पोतपताकाभूतानि इमान्यष्टादशस्थानानि सम्यक् सम्प्रतिलेख्यानि भवन्ति। तद्यथा—

अहो भो! दुस्समायां दुष्प्रजीविनः ॥ १ ॥



'इह खलु०'–इह–प्रवचने, खलुरवधारणे, स च भिन्नक्रम इति दर्शयिष्यामि, 'भो' इत्यामन्त्रणे, प्रव्रजितेन साधुना, किंविशिष्टेन? उत्पन्नदुःखेन–सञ्जातशीतादिशारीरस्त्रीनिषद्यादिमानसदुःखेन, संयमेऽरतिसमापन्नचित्तेन, स एव

विशेष्यते—'अवधानोत्प्रेक्षिणा'—अवधानम्—अपसरणं, संयमादुत्प्राबल्येन प्रेक्षितुं शीलं यस्य स तथाविधः, तेन, उत्प्रव्रजितु-कामेनेति भावः, अनवधावितेनैव—अनुत्प्रव्रजितेनैव, अमूनि वक्ष्यमाणलक्षणानि अष्टादशस्थानानि सम्यग्भावसारं सुष्ठु प्रेक्षितव्यानि—सुष्ठालोचनीयानि भवन्तीति योगः। तान्येव विशेष्यन्ते—हयरश्मि-गजाङ्कुश-वोहित्थसितपट-तुल्यानि, एतदुक्तं स्यात्—यथा हयादीनामुन्मार्गप्रवृत्तिकामानां रश्म्यादयो नियमनहेतवः, तथैतान्यपि संयमादुन्मार्गप्रवृत्तिकामानां भव्यसत्त्वानामिति, यतश्चैवमतः सम्यक् सम्प्रेक्षितव्यानि भवन्ति, 'खलु'—शब्दोऽवधारणे, योगात्सम्यक् सम्यगेव सम्प्रत्युपेक्षितव्यान्येवेत्यर्थः, तद्यथा—'हं भो! दुःख(ष)मायां दुष्प्रजीविनः' इति, हं भो शिष्यामन्त्रणे, दुःख(ष)मायां—अधम-कालाख्यायां दुःखेन—कृच्छ्रेण प्रकर्षेण—उदारभोगापेक्षया जीवितुं शीलाः—जीविनः प्राणिन इति गम्यते १।

लहुस्सगा इत्तरिआ गिहीणं कामभोगा ॥ २ ॥
छा० लघुतरा इत्वरा गृहिणां कामभोगाः ॥ २ ॥

'लहुस्सगा०'—'लघव इत्वरा गृहिणां कामभोगाः' वर्तन्ते दुःख(ष)मायां, सन्तोऽपि लघवः—तुच्छाः प्रकृत्यैव तुषमुष्टिवदसाराः, इत्वराः—अल्पकालाः, गृहिणां—गृहस्थानां कामभोगाः—मदनकामप्रधानाः शब्दादयो विषयाः, विपाककटवश्च, न देवानामिव विपरीताः, अतः किं गृहाश्रमेणेति सम्प्रत्युपेक्षितव्यम् २।



भुज्जो असाय(अ साइ)बहुला मणुस्सा ॥ ३ ॥
छा० भूयोऽसातबहुला मनुष्याः ॥ ३ ॥

'भुञ्जो०'—भूयश्चाऽसातबहुला मनुष्याः, दुःख(प)मायामिति वर्तते, पुनश्च स्वातिबहुलाः—मायाप्रचुराः, मनुष्या इति प्राणिनो न कदाचिद्विश्रम्भहेतवोऽमी, तद्रहितानाञ्च कीदृक् सुखं तथा तद्बन्धहेतुत्वेन च दारुणतरो बन्ध इति किं गृहाश्रमेण ? ३ ।

इमे अ मे दुक्खे न चिरकालोवट्ठाइ भविस्सइ ॥ ४ ॥

छा० इदं च मम दुःखं न चिरकालोपस्थायि भविष्यति ॥ ४ ॥

'इमे०'—इदं च दुःखं मे न चिरकालोपस्थायि भविष्यति ४ ।

ओमजणपुरक्कारे ॥ ५ ॥

छा० अवमजनपुरस्कारः ॥ ५ ॥

'ओमजण०'—ओ(अव)मजनपुरस्कारः—उत्प्रव्रजितेन तु न्यून(जघन्य)जनस्यापि स्वव्यसनगुप्तये अभ्युत्थानादि कार्यम्, अधार्मिकराजविषये वा चे(प)ष्टिप्रयोक्तुः खरकर्मणो नियमित एव । इहैवेदमधर्मफलम्, अतः किं गृहस्थाश्रमेण ? ५ । एवं सर्वत्र क्रिया योजनीया ।

वंतस्स य पडिआयणं ॥ ६ ॥

छा० वान्तस्य च प्रत्यादानम् ॥ ६ ॥

'वंतस्स०'—वान्तस्य प्रत्यापानं—भुक्तोज्झितपरिभोग इत्यर्थः ६ ।

**अहरगइवासोवसंपया ॥ ७ ॥**

**छा० अधरगतिवासोपसम्पत् ॥ ७ ॥**

'अहरगइ०'—अधरगतिवासोपसम्पत्—अधोगतिः—नरकगतिः, तस्यां वसनमधोगतिवासः, एतन्निमित्तभूतं कर्म गृह्यते, तस्योपसम्पत्—सामीप्येनाङ्गीकरणम् ७ ।

**दुलहे खलु भो ! गिहीणं धम्मे गिहिवासमज्झे वसंताणं ॥ ८ ॥**

**छा० दुर्लभः खलु भो ! गृहिणां धर्मो गृहवासमध्ये वसताम् ॥ ८ ॥**

'दुल्लहे०'—दुर्लभः खलु भो ! गृहिणां धर्मः, खलुरवधारणे, दुर्लभ एव प्रमादबहुलत्वात्, गृहवास(पाश)-मध्ये वसताम्, गृहशब्देन पाशकल्पाः पुत्रकलत्रादयो गृह्यन्ते ८ ।

**आयंके से वहाय होइ ॥ ९ ॥ संकप्पे से वहाय होइ ॥ १० ॥**

**छा० आतङ्कस्तस्य वधाय भवति ॥ ९ ॥ सङ्कल्पस्तस्य वधाय भवति ॥ १० ॥**

'आयंके०'—आतङ्कस्तस्य वधाय भवति, आतङ्कः—सद्योघाती विसूचिकादिरूपः ९ ।

'संकप्पे०'—सङ्कल्पस्तस्य वधाय भवति, सङ्कल्पः—इष्टानिष्ट(योग)वियोगप्राप्तिजो मानसातङ्कस्तस्य गृहिणस्तथाचेष्टायोगात्—मिथ्याविकल्पाभ्यासेन ग्रहादिप्राप्तेर्वधाय भवति १० ।

---

१ 'इष्टाअनिष्टवियोगप्राप्तिजो मानसातङ्कः' इति च पाठः ।

सोवक्केसे गिहवासे, निरुवक्केसे परिआए ॥ ११ ॥
छा० सोपक्लेशो गृहवासः, निरुपक्लेशः पर्यायः ॥ ११ ॥

बंधे गिहवासे, मुक्खे परिआए ॥ १२ ॥
छा० बन्धो गृहवासः, मोक्षः पर्यायः ॥ १२ ॥

सावज्जे गिहवासे, अणवज्जे परिआए ॥ १३ ॥
छा० सावद्यो गृहवासः, अनवद्यः पर्यायः ॥ १३ ॥

'सोवक्केसे०'—सोपक्लेशो गृहवासः सहोपक्लेशैः कृषिवाणिज्यादिकैः स सोपक्लेशः ११।
'निरुवक्केसे०'—निरुपक्लेशः पर्यायः, एभिरेवोपक्लेशै रहितः १२।
'बंधे०'—बन्धो गृहवासः सदा तद्धेत्वनुष्ठानात्कोशकारकीटकवत् १३।
'मुक्खे०'—मोक्षः पर्यायः, अनवरतं कर्मनिगडविगमान्मुक्तवत् १४।
'सावज्जे०'—अत एव सावद्यो गृहवासः, सावद्यः—सपापः १५।
'अणवज्जे०'—अनवद्यः पर्यायः, अहिंसादिपालनात्मकत्वात् १६।

बहुसाहारणा गिहीणं कामभोगा ॥ १४ ॥
छा० बहुसाधारणा गृहिणां कामभोगाः ॥ १४ ॥

'बहुसाहारणा०'—बहुसाधारणा गृहिणां कामभोगा इति, बहुसाधारणाश्चौरराजकुलादिसामान्या गृहस्थानां कामभोगाः १७ ( १४ )।

पत्तेअं पुण्णपावं ॥ १५ ॥

छा० प्रत्येकं पुण्यपापम् ॥ १५ ॥

'पत्तेअं०'—प्रत्येकं पुण्यपापमिति मातापितृपुत्रकलत्रादिनिमित्तमप्यनुष्ठितं पुण्यपापं प्रत्येकं—पृथक् पृथक्, येनानुष्ठितं तस्य कर्तुरेव तदिति भावार्थः १८ ( १५ )।

एतदन्तर्गतो वृद्धाऽभिप्रायेणाऽशेषग्रन्थः, समस्तोऽत्रैव, अन्ये तु वाचकव्कृतौ ( व्याचक्षते )—'सोपक्लेशो गृहवासः,' इत्यादिषु पदसु स्थानेषु सप्रतिपक्षेपु स्थानत्रयं गृह्यते, एवञ्च 'बहुसाधारणा गृहिणां कामभोगाः' इति चतुर्दशं स्थानम् १४। 'प्रत्येकं पुण्यपापमिति' पञ्चदशम् १५। शेषाण्यभिधीयन्ते—

अणिच्चे खलु भो ! मणुआण जीविए कुसग्गजलबिंदुचंचले ॥ १६ ॥

छा० अनित्यं खलु भो ! मनुजानां जीवितं कुशाग्रजलबिन्दुचञ्चलम् ॥ १६ ॥

'अणिच्चे०'—अनित्यं खलु भो ! मनुष्याणां जीवितं कुशाग्रजलबिन्दुचञ्चलम्, तदलं गृहस्थाश्रमेण १६।

बहुं च खलु भो ! पावं कम्मं पगडं ॥ १७ ॥

छा० बहु च खलु भो ! पापं कर्म प्रकटम् ॥ १७ ॥

'बहुं च०'—बहु च खलु भो ! पापं कर्म प्रकृतम्, बहु च—'च'—शब्दात्क्लिष्टञ्च, खलुशब्दोऽवधारणे,

बद्धेव पापं कर्म—चारित्रमोहनीयादि, प्रकृतं—निर्वर्तितं, मयेति गम्यते, श्रामण्यप्राप्तावप्येवं क्षुद्रबुद्धिर्भवति, अतो न किञ्चिद्गृहाश्रमेण १७ ।

**पावाणं च खलु भो! कडाणं कम्माणं पुव्विं दुच्चिण्णाणं दुप्पडिक्कंताणं वेइत्ता मुक्खो, णत्थि अवेइत्ता, तवसा वा झोसइत्ता, अट्ठारसमं पयं भवइ ॥ १८ ॥ भवइ अ इत्थ सिलोगो—**

**छा० पापानां च खलु भो! कृतानां कर्मणां पूर्वं दुश्चीर्णानां दुष्प्रतिक्रान्तानां वेदित्वा मोक्षः, नाऽस्त्यवेदित्वा, तपसा वा शोषयित्वा, अष्टादशं पदं भवति ॥ १८ ॥ भवति चाऽत्र श्लोकः—**

'पावाणं०'—पापानां च, वा पुण्यानां, खलु भो! कृताना कर्मणां, 'खलु'—शब्दः कारिताऽनुमति विशेषणार्थः, भो! इति शिष्यामन्त्रणे, प्राक्—पूर्वमन्यजन्मसु दुश्चरितानां प्रमादकषायजदुश्चरित(जनितानि) दुश्चरितानि, कारणे कार्योपचारात्, दुश्चरितहेतूनि वा, कार्ये कारणोपचारात्, एवं दुष्पराक्रान्तानां—मिथ्यादर्शनाऽविरतिजदुष्पराक्रान्तजनितानि दुष्पराक्रान्तानि, हेतौ फलोपचारात्, दुष्पराक्रान्तहेतूपचारात्, इह च दुश्चरितानि मद्यपानाऽलीकभाषणादीनि, दुष्पराक्रान्तानि तु वधबन्धादीनि, तदमीषामेवम्भूतानां कर्मणां वेदयित्वा—अनुभूय, फलमिति वाक्यशेषः, किम्? मोक्षो भवति-प्रधानपुरुषार्थो, भवति, नास्त्यवेदयित्वा, 'तपसा वा क्षपयित्वा' इति न किञ्चिद्गृहाश्रमेणेति सम्प्रत्युपेक्षितव्यमिति, अष्टादशं पदं भवति १८ । भवति चाऽत्र श्लोकः। अत्रेत्यष्टादशस्थानार्थसम्बन्धे उक्ताऽनुक्तार्थसङ्ग्रहपर इत्यर्थः ।

